# नीलमतपुराणम्

ओं स्वस्ति । श्रीगणेशाय नमः । नमो भगवते वासुदेवाय ओम् ।

श्रीनिवासं हरिं देवं वरदं परमेश्वरम्
त्रैलोक्यनाथं गोविन्दं प्रणम्याक्षरमव्ययम् १
परिक्षिद्वंशभृच्छ्रीमान्नृपतिर्जनमेजयः
पप्रच्छ शिष्यं व्यासस्य वैशम्पायनमन्तिकात् २
श्रीजनमेजयः
महाभारतसंग्रामे नानादेशनराधिपाः
महाशूराः समायाताः पितॄणां मे महात्मनाम् ३
कथं काश्मीरको राजा नायातस्तत्र कीर्तय
पाण्डवैर्धार्तराष्ट्रैर्वा न वृतः स कथं नृपः ४
कश्मीरमण्डलं चैव प्रधानं जगति स्थितम् ५
वैशम्पायनः
----- वासुदेवं स्वयंवरे ।
जगाम माधवं योद्धुं चतुरंगबलान्वितः ६
तत्र तस्याभवद् युद्धं वासुदेवेन धीमता
यादृशं वासुदेवस्य नरकेन सहाभवत् ७
ततः स वासुदेवेन सुयुद्धे विनिपातितः ८
अन्तर्वत्नीं तस्य पत्नीं वासुदेवोऽभ्यषेचयत्
भविष्यत्पुत्रराज्यार्थं तस्य देशस्य गौरवात् ९
ततः सा सुषुवे पुत्रं बालं गोनन्दसंज्ञितम्
बालभावात् पाण्डुसुतैर्नानीतः कौरवैर्न वा १०
जनमेजयः
देशस्य गौरवं चक्रे किमर्थं द्विजसत्तम
वसुदेवो महात्मा यदभ्यषिञ्चत् स्वयं स्त्रियम् ११
वैशम्पायनः

यैव देवी उमा सैव कश्मीरा नृपसत्तम
आसीत् सरः पूर्णजलं सुरम्यं सुमनोहरम् १२
कल्पारम्भप्रभृति यत् पुरा मन्वन्तराणि षट्
अस्मिन् मन्वन्तरे जातं विषयं सुमनोहरम् १३
शालिमालाकुलं स्फीतं सत्फलाद्यैः समन्वितम्
स्वाध्यायध्यानेनिरतैर्यज्ञशीलैर्जनैर्युतम् १४
तपस्विभिर्धर्मपरैर्वेदवेदाङ्गपारगैः
क्षत्रियैः सुमहाभागैः सर्वशस्त्रास्त्रपारगैः १५
वैश्यैर्वृत्तिपरैः शूद्रैर्द्विजातिपरिचारकैः
देवतायतनोपेतं सर्वतीर्थमयं शुभम् १६
पृथिव्यां यानि तीर्थानि तानि तत्र नराधिप
ऋष्याश्रमसुसंबाधं शीतातपसुखं शुभम् १७
अधृष्यं परराष्ट्राणां तद्भयानामकोविदम्
गोश्वनागादिबहुलं दुर्भिक्षातंकवर्जितम् १८
अदेवमातृकं रम्यं पुण्यं प्राणभृतां हितम्
सर्वसस्यगुणोपेतंह्यनातंकं बहुप्रजम् १९
स्त्रीभिश्च सुकुमाराभिर्देवालयसमश्रियम्
दुष्टैर्भुजंगशार्दूलमहिषक्षैर्विवर्जितम् २०
ब्रह्मघोषधनुघोषनित्योत्सवसमाकुलम्
केलिप्रायजनाकीर्णं नित्यहृष्टैर्जनैर्वृतम् २१
उद्यानारामसंबाधं वीणापटहनादितम्
नित्यशौण्डजनोपेतं सतां हृदयवल्लभम् २२
नानापुष्पफलोपेतं नानाद्रुमलतौषधम्
नानामृगगणाकीर्णं सिद्धचारणसेवितम् २३
कश्मीरामण्डलं पुण्यं सर्वतीर्थमरिन्दम
तत्र नागहृदाः पुण्यास्तत्र पुण्याः शिलोच्चयाः २४
तत्र नद्यस्तथा पुण्याः पुण्यानि च सरांस्यपि

देवालया महापुण्यास्तेषां चैव तथाश्रमाः २५
तस्य मध्येन निर्याता सीमन्तमिव कुर्वती
वितस्ता परमा देवी साक्षाद्धिमनगोद्भवा २६
जनमेजयः
मन्वन्तरेषु पूर्वेषु यदासीद् विमलं सरः
कथं वैवस्वते जातं तन्मण्डलमिति द्विज २७
वैशम्पायनः
इममर्थं पुरा जातु गोनन्दाख्यो नृपोत्तमः
तीर्थयात्राप्रसङ्गेन बृहदश्वमुपागतम् २८
पूजयित्वा स नृपतिः पप्रच्छ नृपसत्तम २९
गोनन्दः
मन्वन्तरेषु पूर्वेषु नासीद्देशमिदं किल
कश्मीराख्यं बभूवास्मिन् कथं वैवस्वतान्तरे ३०
बृहदश्वः
राशिभोगो रवेर्मासः सौर इत्यभिधीयते
ऋतुस्तु मासौ द्वौ ज्ञेयावयनं च ऋतुत्रयम् ३१
अयने द्वे तथैवाब्दमब्दानां नृप सङ्ख्यया
द्वात्रिंशच्चसहस्राणि लक्षाणां च चतुष्टयम् ३२
प्रोक्तं कलियुगं राजन् द्विगुणं द्वापरं स्मृतम्
त्रिगुणं च तथा त्रेता कृतं ज्ञेयं चतुर्गुणम् ३३
चतुर्युगैकसप्तत्या मन्वन्तरमिहोच्यते ३४
तस्मिन् मन्वन्तरेऽतीते प्रजाः स्थावरजङ्गमाः
भूर्लोकमाश्रिताः सर्वा नाशमायान्ति सर्वशः ३५
एकार्णवं जगत्सर्वं तदा भवति भूतले
हिमवान् हेमकूटश्च निषधो नीलपर्वतः ३६
श्वेतश्च शृङ्गवान्मेरुर्माल्यवान् गन्धमादनः
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि ३७

विन्ध्यश्च पारियात्रश्च न विनश्यन्ति पर्वताः
शेषं विनश्यते सर्वं जम्बुद्वीपमशेषतः ३८
तदा विनष्टे लोकेऽस्मिन् महादेवः स्वयंप्रभुः
आपो भूत्वा स्वयं लोके तिष्ठत्यस्मिन् समन्ततः ३९
सती देवी स्वयं काले तस्मिन्नौत्वं करोति वै
मनुर्भविष्यंस्तस्मिंस्तु सर्वबीजानि मायया ४०
तदा स्थापयते राजंस्तां च नावं जगद्गुरुः
मत्स्यरूपधरो विष्णुः शृङ्गे कृत्वापकर्षति ४१
आकृष्य नावं तां देवस्तस्मिन् पर्वतमस्तके
बद्ध्वा व्रजति भूपाल ह्यविज्ञातां तदा गतिम् ४२
इदं च शिखरं पश्य देशेऽस्मिन् नृप पश्चिमे
नौबन्धनमिति ख्यातं पुण्यं पापभयापहम् ४३
कृततुल्ये तदा काले व्यतीते तु मनुस्तदा
विदधाति प्रजासर्गं यथापूर्वमरिन्दम ४४
नौदेहेन सती देवी भूमिर्भवति पार्थिव
तस्यां तु भूमौ भवति सरस्तु विमलोदकम् ४५
षड्योजनायतं रम्यं तदर्धेन च विस्तृतम्
सतीदेशमिति ख्यातं देवाक्रीडं मनोहरम् ४६
आकाशमिव गम्भीरं जलजैश्च विराजितम्
शीतलामलपानीयं सर्वभूमिमनोहरम् ४७
अस्मिन् वैवस्वते प्राप्ते राजन्मन्वन्तरे किल
मारीचाय ददौ दश कश्यपाय त्रयोदश ४८
स्वसुताः पार्थिवश्रेष्ठ तासां नामानि मे शृणु
अदितेस्तनया देवा दितेर्दैत्यास्तथैव च ४९
दनायुषाया वृत्रस्तु भद्रास्तु सुरभेः सुताः
यक्षाश्च राक्षसाश्चैव खशायास्तनयाः स्मृता ५०
ऐरावणस्तु इरापुत्रः प्रवाया दश गायनाः

मुनेः प्रसवमुक्तं हि दिव्यमप्सरसां गणम् ५१
कालायाः कालकल्पाश्च कालकेयाः सुताः स्मृताः
दानवाश्च दनोः पुत्राः क्रोधायाः कन्यका दश ५२
कद्रोश्च तनया नागा विनतायास्तथा सुतौ
गरुडारुणौ विज्ञेयौ पक्षिणां प्रवरौ नृप ५३
कद्रूश्च विनता चैव स्पर्धमाने परस्परम्
विधानयोगात्सततं चक्रतुर्वैरमुत्तमम् ५४
कदाचिदमृतोद्भूतं दृष्ट्वोच्चैःश्रवसं हयम्
श्वेतं जगाद विनता कद्रूः शाठये तथा स्थिता ५५
कृष्णबालमहं मन्ये तमश्वं विनते सदा
इत्याह कद्रूर्विनतां पण आसीत्तयोस्तदा ५६
अश्वं प्रति महीनाथ दास्यभावेथ सर्वथा
प्रेरितास्तु ततः पुत्राः कद्र्वा गत्वा तथा व्यधुः ५७
ततस्ते कृष्णबालं तं दृष्ट्वा तुरगमुत्तमम्
कद्रूर्जितास्य वोचत्तां विनतां चारुदर्शनाम् ५८
दास्ये जितां तु विनतां गरुडः सुमहायशाः
मोक्षयामास चाहृत्य सोमं शक्रान् महाबलः ५९
शक्राच्चैव वरं लेभे पन्नगानां च भक्षणम्
मातुवैरानुबन्धेन भक्षयामास पन्नगान् ६०
भक्ष्यमानेषु नागेषु गरुडेन महात्मना
वासुकिः शरणं प्रायाद् देवदेवं जनार्दनम् ६१
नमोऽस्तु शार्ङ्गगदासिपाणे
नमोऽस्तु ते दानवनाशनाय
नमोऽस्तु ते पद्मजसंस्तुताय ६२
नमोऽस्तु ते लोकहिते रताय
नमोऽस्तु ते वासवनन्दनाय
नमोऽस्तु ते भक्तवरप्रदाय

नमोऽस्तु ते सत्पथदर्शनाय ६३
उन्निद्रनीलनलिनद्युतिचारुवर्णं
संतप्तहाटकनिभे वसने वसानम् ६४
क्षीरोदकन्यार्पितपादपद्मं
देवं प्रपन्नोऽस्म्यनघं वरेण्यम् ।
परं पुराणं परमं सनातनं
तमादिदेवं प्रणतोऽस्मि भक्त्या ६५
फणावलीरत्नसहस्रचित्रे शेषस्य भोगे विमले विशेषे
लोकस्य सर्वस्य तु चिन्तयानः शुभाशुभं रक्ष ममाद्यदेव ६६
खगपतिरतिचण्डभीमवेगो
मम कुलमाशु विनाशयत्यनन्त
कुरु मुनिवरसंस्तुताद्य रक्षां
पवनबलं विनिवारयस्व तार्क्ष्यम् ६७
बृहदश्वः
तमाह वासुकिं देवो भगवान् भयविह्वलम् ६८
सतीदेशेऽत्र पुण्योदे सरस्यम्बरसंनिभे
धर्मिष्ठैः सहितो नागैर्वसस्वामितविक्रम ६९
तस्मिन् सरसि ये स्थानं करिष्यन्ति भुजंगमा
तस्य तस्याहिशत्रुर्वै न हनिष्यति जीवितम् ७०
सतीदेशे कृतस्थानं तिष्ठन्तमकुतोभयम्
न हनिष्यति नागेन्द्र नागारिर्मम वाहनः ७१
सतीदेशे च ये नागा वसिष्यन्ति महाबलाः
राज्ये महाभाग त्वं नीलमभिषेचय ७२
वासुकिश्च तथा चक्रे देवदेवस्य भाषितम्
तत्रस्थानां च नागानां नासीद् गरुडतो भयम् ७३
कदाचित् सरसस्तस्य तीरेऽम्बुरुहलोचनः
शक्रश्चिक्रीड सहितः पौलोम्या पार्थिवोत्तम ७४

क्रीडमानस्य शक्रस्य तं देशं कालचोदितः
संग्रहो नाम दैत्येन्द्रः प्राप्तः परमदुर्जयः ७५
तस्य दृष्ट्वा शचीं रेतः प्रस्कन्नं सलिलाशये
स च कामवशोन्मत्तः शचीहरणलालसः ७६
ततः शक्रेण सङ्ग्रामे पूर्णे संवत्सरं गतम्
वर्षमासीत्तयोर्युद्धं शक्रसंग्रहयोः पुरा ७७
संवत्सरान्ते तं हत्वा शक्रस्त्रिदशपूजितः
जगाम त्रिदिवं देवः पूज्यमानो दिवालयैः ७८
तस्मिन् सरसि यत्तस्य सङ्ग्रहस्य दुरात्मनः
प्रस्कन्नं पतितं रेतः तस्माज्जातो जले शिशुः ७९
कृपया स शिशुर्नागैर्जले तस्मिन् विवर्धितः
यस्मादयं जले जातस्तस्मादेष जलोद्भवः ८०
आराध्य तपसा लेभे वरं देवात् पितामहात्
जलेऽमरत्वं माया च विक्रमं चातुलं तथा ८१
लब्धमायस्तु दैत्येन्द्रो भक्षयामास मानवान्
समीपे सरसस्तस्य नानादेशेष्वस्थितान् ८२
दार्वाभिसारगान्धारजहुण्डरशकान् खशान्
तङ्गणान् माण्डवान् मद्रानन्तर्गिरिबहिर्गिरीन् ८३
ते हन्यमानाः पापेन देशात् सम्प्राद्रवन् भयात्
शून्येषु तेषु देशेषु विचचार स निर्भयः ८४
एतस्मिन्नेव काले तु कश्यपो भगवान् मुनिः
तीर्थयात्राप्रसङ्गेन चचार सकलां महीम् ८५
वर्षेऽस्मिन् भारते पुण्ये शुभाशुभफलप्रदे
पुष्करं दुष्करगमं ब्रह्मलोकप्रदं शिवम् ८६
प्रयागं यागबहुलं सर्वकिल्बिषनाशनम्
धर्मक्षेत्रं कुरुक्षेत्रं नैमिषं पापनाशनम् ८७
पितृणामालयं पुण्यं हयशीर्षं महात्मनाम्

सर्वपापहरं दिव्यं तथा चैव चरङ्कटम्  ८८
वाराहपर्वतं पुरायं पुरायं पंचनंदं तथा
कालाञ्जनं सगोकर्णं केदारं समहालयम्  ८९
नारायणस्य च स्थानं सपुरायं बधिराश्रमम्
सुगन्धां शतकुम्भां च कालिकाश्रममेव च  ९०
शाकम्भरीं ललितिकां शालिग्रामं पृथूदकम्
सुवर्णाख्यं रुद्रकोटिं प्रभासं सागरोदकम्  ९१
इन्द्रमार्गं मतङ्गस्य वापीं पापप्रसूदिनीम्
अगस्त्यस्याश्रमं पुरायं तथा तराडुलिकाश्रमम्  ९२
जम्बुमार्गं तथा पुरायं पुरायां वाराणसीं तथा
तथैव जाह्नवीं देवीं गङ्गां गगनमेखलाम्  ९३
यमुनां यमपाशघ्नीं शतद्रुं द्रुतगामिनीम्
सरयूं यूपसम्पन्नां तथा देवीं सरस्वतीम्  ९४
गोदावरीं वैतरणीं गोमतीं बाहुदामपि
वेदस्मृतिं सवर्णासां ताम्रवर्णोत्पलावतीम्  ९५
सिप्रां सनर्मदां शोणां परोष्णीं च महानदीम्
इक्षुमतीं सरज्वां च दुर्गां शतशिलामपि  ९६
कावेरीं ब्राह्मणीं गौरीं कम्पनां तमसां तथा
गंगासागरसन्धिं च सिन्धुसागरसंगमम्  ९७
भृगुतुङ्गं विशालां च कुब्जाभ्रं रैवतं तथा
गङ्गाद्वारे कुशावर्तं बिल्वकं नीलपर्वतम्  ९८
तथा कनखलं तीर्थं तीर्थान्यन्यानि पार्थिव  ९९
तीर्थयात्रागतं श्रुत्वा कश्यपं पन्नगाधिपः
नीलो जगाम तं द्रष्टुं तीर्थे कनखले तदा  १००
स गत्वा पितरं दृष्ट्वा पितुः पादौ निपीड्य च
निवेद्य नामधेयं स्वं ववन्दे भुजगाधिपः  १०१
पित्रा मूर्धन्युपाध्राय पूजितः स यथाविधि

न्यषीदत्तदा बृस्यां कौश्यां सा तदनुज्ञया १०९
उपविष्टस्तदा नागो विज्ञापयत्कश्यपम्
पितरं तपसां स्थानं यत्तच्छृणु नराधिप १०३
तीर्थान्यनुचरन्तं हि श्रुत्वाऽहं धर्मवत्सलम्
भवन्तं सहसा प्राप्तः शुश्रूषार्थी द्विजोत्तम १०४
पूर्वदेशे त्वया ब्रह्मन् दक्षिणे पश्चिमे तथा
दृष्टानि सर्वतीर्थानि यास्यामस्तूत्तरां दिशम् १०५
तत्र मद्रेषु तीर्थानि सन्ति पुण्यानि मानद
तथा च पर्वतश्रेष्ठे हिमवत्यचलोत्तमे १०६
विपाशा पापशमनी शश्वच्छ्रेयःप्रदा शिवा
देवलोकप्रदा स्नाने नदी देवह्रदा तथा १०७
तथा पापहरो देवो हरश्च हरिरीश्वरः
तथा च संगमः पुण्यः करवीरपुरं प्रति १०८
तत्र देवह्रदा याति विपाशां निम्नगोत्तमाम्
विपाशायां तथा पुण्यं सततं कालिकाश्रमम् १०९
इरावती तथा पुण्या सर्वकल्मषनाशिनी
रेवत्यां च विशेषेण तथाष्टम्यां विशेषतः ११०
षष्टिस्तीर्थसहस्राणि वसन्त्येकामिरावतीम् १११
कुम्भावसुन्दः पुण्योदः पुण्योदा देविका नदी
नित्यमेव तथा पुण्यो विश्वामित्रो महानदः ११२
उद्दाख्यस्तु महापुण्यः संगमाश्च पृथक् पृथक्
इरावत्यां तथा पुण्यं देविकायां तथैव च ११३
यैव देवीह्युमा सैव देविका प्रथिता भुवि
मद्राणामनुकम्पार्थं भवद्भिरवतारिता ११४
यां दृष्ट्वा मानवः पूतो भवतीह न संशयः
इन्द्रमार्गः सोमतीर्थं पुण्यमम्बुजनस्तथा ११५
सुवर्णबिन्दुस्तत्रैव हरस्यायतनं शुभम्

स्कन्दस्यायतनं तत्र सर्वपापनिसूदनम्  ११६
उमापतिस्तथापुरायो रुद्रतीर्थं तथैव च
दुर्गाद्वारं तु पुरायोदं कोटितीर्थं तथैव च  ११७
रुद्रस्य तीर्थं कामारव्यं पुष्पन्यासं तथैव च
पुरायं हंसपदं प्रोक्तमृषिरूपं च मानद  ११८
सर्वत्र देविकातीर्थं क्षेत्रं क्रोशचतुष्टयम्
यत्र कूपतटाकारव्यं पुरायं सर्वमशेषतः  ११९
आपगा च नदी पुराया तौषी तोषितभास्करा
चन्द्रांशुशीतलजला चन्द्रभागा सरिद्वरा  १२०
पुरायं वै चन्द्रभागायास्तीर्थं वैवट्टिलामुखम्
शंखमर्दलनामा च तथा पापनिसूदनः  १२१
गुह्येश्वरः शतमुख इष्टिकापथ एव च
कदम्बेशस्तथा पुरायः क्षेत्रं चैव समन्ततः  १२२
यावच्छतमुखं तीर्थं यावत्तीर्थं गुह्येश्वरम्
तावत् क्षेत्रं समं पुरायं वाराणस्याथवाधिकम्  १२३
सर्वत्रैव सदा पुराया चन्द्रभागा महानदी
माघशुक्लत्रयोदश्यां पुष्ययोगे विशेषतः  १२४
पृथिव्यां यानि तीर्थानि ह्यसमुद्रसरांसि च
चन्द्रभागां गमिष्यन्ति माघशुक्लत्रयोदशीम्  १२५
पुरायं वस्त्रापथंप्रोक्तं देवश्च छागलेश्वरः
द्वितीया च तथा भौमी तस्याः प्रभव एव च  १२६
सतीदेहस्य सरसस्तीर्थं विष्णुपदं सरः
क्रमसारेति विरव्यातं सर्वकल्मषनाशनम्  १२७
एतान्यन्यानि च मुने तीर्थान्यनुसराशु वै
येषां स्नानेन मुच्यन्ते पापात्मानोऽपि मानवाः  १२८
इत्युक्तः स तथेत्युक्त्वा नीलेन सहयायिना
जगाम तानि तीर्थानि जातेहः पूर्वमेव तु  १२९

उत्तीर्य यमुनां देवीं तथा देवीं सरस्वतीम्
कुरुक्षेत्रं तथा दृष्ट्वा सन्नीतिर्यत्र विश्रुता १३०
तीर्थसन्नयनश्चैव सन्नीतिर्भुवि कथ्यते १३१
पृथिव्यां यानि तीर्थानि चासमुद्रंसरांसि च
कृष्णपक्षावसाने वै यत्र यान्ति सदानघ १३२
श्राद्धं यः कुरुते तत्र राहुग्रस्ते दिवाकरे
अश्वमेधसहस्रस्य फलं प्राप्नोत्यनुत्तमम् १३३
सन्नीतिं तां तथा दृष्ट्वा चक्रतीर्थं तथैव च
यदर्थं नारदोद्गीता गाथा चरति भूतले १३४
अहो लोकस्य निर्बन्धमादित्यग्रहणं प्रति
चक्रतीर्थेन पर्याप्तं ग्रहाद्दशगुणं फलम् १३५
तं दृष्ट्वा चक्रतीर्थाख्यं तथा तीर्थं पृथदकम्
दृष्ट्वा विष्णुपदं पुण्यं तथा चामरपर्पटम् १३६
शतद्रुं तत्र चोत्तीर्य ऋषिर्गङ्गां च निम्नगाम्
अर्जुनाश्रमासाद्य देवसुन्दं तथैव च १३७
उत्तीर्य च महाभागां विपाशां पापनाशिनी
दृष्ट्वान् सकलं देशं तदा शून्यं स कश्यपः १३८
दृष्ट्वा स मद्रविषयं शून्यं प्रोवाच पन्नगम्
किमर्थं नील देशोऽयं मद्राणां शून्यतां गतः १३९
रमणीयः सदैवैष दुर्भिक्षपापवर्जितः
नित्यं धान्यधनोपेतस्तन्ममाचक्ष्व पृच्छतः १४०
नीलः
भगवन् विदितं सर्वं यथा पूर्वं मया शिशुः
पालितः सङ्ग्रहसुतो दैत्यो नाम जलोद्भवः १४१
सोऽद्य लब्धवरः पापो ब्रह्मणोऽव्यक्तयोनितः
न मां गणयते धृष्टो न चाहं तस्य निग्रहे १४२
समर्थो वरदानेन त्रैलोक्याधिपतेः प्रभोः १४३

तेनेहं सकलं शून्यं मद्रदेशं कृतं प्रभोरूः
खादता नरमांसानि दुष्टेनाकृतबुद्धिना १४४
दार्वाभिसार--गान्धार--जुहुराडर--शकाः खशाः ।
तङ्गणा माराडवाश्चैव अन्तर्गिरि--बहिर्गिरी १४५
एते वै मुख्यततेन देशाः शून्यीकृताः प्रभो
निग्रहे भगवंस्तस्य कुरु बुद्धिं जगद्धिताम् १४६
बृहदश्वः
एवमुक्तस्तथेत्युक्त्वा स्नात्वा तीर्थेषु कृत्स्नतः
आजगाम सतीदेशं विमलं तत् सरोत्तमम् १४७
तत्र स्नात्वा जगांमाशु ब्रह्मलोकं सनातनम्
पद्म्यां चंक्रमणं त्यक्त्वा स्व ऋद्ध्यैव नरोत्तम १४८
नीलेन सहितः प्रायान्नागराज्ञा महात्मना
तौ गत्वा ब्रह्मसदनं ववन्दतुररिन्दम १४९
देवं कमलयोनिं च संगत्या तत्र च स्थितौ
वासुदेवेश्वरौ देवावनन्तं च महामतिम् १५०
तैस्तु सम्पूजितौ तत्र जलोद्भवविचेष्टितम्
कथयामासतुरुभौ ततो देवः पितामहः १५१
अवोचदेनं नागेशमृषिं चामितविक्रमम्
नौबन्धन्बं प्रयास्यामो वयं चैतस्य निग्रहे १५२
ततस्तं केशवो देवो घातयिष्यत्यसंशयम्
एतच्छ्रुत्वा हरिः प्रायात्ताद्र्येण परवीरहा १५३
तमन्वयाद्वृषारूढो हरो देव्या सहानघ
हंसयानौ गतौ ब्रह्मा नागौ तौ मेघवाहनौ १५४
ऋद्ध्यैव कश्यपः प्रायच्छ्रुतवांस्तत् पुरंदरः
ततो देवगणैः सार्धं स यातो यत्र केशवः १५५
यमोऽग्निर्वरुणो वायुः कुबेरो निर्ऋतिस्तथा
आदित्या वसवो रुद्रा विश्वेदेवा मरुद्गणाः १५६

अश्विनौ भृगवः साध्यास्तथैवाङ्गिरसः सुताः
ऋषयश्च महाभागा गन्धर्वाप्सरसां गणाः १५७
देवपत्न्यस्तथा सर्वा देवानां याश्च मातरः
विद्याधरगणा यक्षाः सागराः सरितस्तथा १५८
मकरेण ययौ गङ्गा कूर्मेण यमुना नदी
वृषारूढा शतद्रूश्च महिषेण सरस्वती १५९
अश्वारूढा विपाशा च गजारूढा इरावती
सिंहेन चन्द्रभागा च सिन्धुर्व्याघ्रेण पार्थिव १६०
देविका गवयारूढा मृगेण सरयूर्नदी
मन्दाकिनी मनुष्येण पयोष्णी चाप्यजेन तु १६१
नर्मदा च मयूरेण सारङ्गेण च गोमती
गोदावरी च मेषेण तथा हंसेन कम्पना १६२
बकेन गण्डकी राजन् कावेरी उष्ट्रगा तथा
नक्रेणेक्षुमती पुण्या सीता पुण्या बलाकया १६३
चमरेण च लौहित्यो वंक्षुः क्रोडेन सत्वरः
ह्लादिनी जीवजीवेन ह्रादिनी कुक्कुटेन च १६४
पावन्यपि तुरंगेण शोणः सर्पगतस्तथा
मेघेन कृष्णवेणी च भुवेणा शशकेन च १६५
एताश्चान्याश्च या नद्यः प्रययुर्वाहनैः स्वकैः
अनुजग्मुर्जगन्नाथं हरिं युद्धदिदृक्षया १६६
नौबन्धनमथासाद्य केशवो वै व्यवस्थितः १६७
देवानुयात्रानिनदं श्रुत्वा दैत्योऽपि दुर्मतिः
जले त्ववध्यमात्मानं विदित्वा न विनिर्गतः १६८
अनिर्गतं तं तु तदा विज्ञाय मधुसूदनः
नौबन्ध एवमुदितो विवेशाथ सुरैः सह १६९
नौबन्धशिखरे रुद्रो दक्षिणे शिखरे हरिः
उत्तरे शिखरे ब्रह्मा तेषामन्वसुराः सुराः १७०

एवं ते विविशुः शैले ततो देवो जनार्दनः
अनन्तमाह धर्मात्मा वधार्थं दानवस्य तु १७१
कुरुष्व लाङ्गलेन त्वं विदार्याद्य हिमालयम्
इदं सरोवरं दिव्यं निस्तोयं शीघ्रमेव तु १७२
बृहदश्वः
ततस्त्वनन्तो गिरिसन्निकाशः समग्रचन्द्रस्य समानकान्तिः
व्यवर्धतावृत्य दिवं महीं च सन्त्रासयन् दैत्यगणान् समन्तात् १७३
नीलाम्बरः काञ्चनबद्धमौलिः सम्पूज्यमानस्त्रिदशैः समस्तैः
विदारयामास स लाङ्गलेन हिमाचलं शैलवरं पृथिव्याम् १७४
विदारिते पर्वतराजराजे विनिर्ययौ तज्जलमाशु वेगात्
वेगेन शब्देन च सर्वभूतान् सन्त्रासयानं कुटिलैस्तरङ्गैः १७५
हिमाचलाभैर्गगनं स्पृशदभिः संप्लावयानं गिरिमस्तकानि
संक्षीयमाणे सरसस्तु तोये चकार मायां स जलोद्भवाख्यः १७६
अथान्धकारं ससृजे समन्ता ददृश्यमासीद् भवनं नृवीर
शम्भुस्तदा चन्द्रदिवाकरौ द्वौ जग्राह देवोऽथ करद्वयेन १७७
प्रकाशमासीज्जगति निमेषाद्ध्वस्तं तथा सर्वमथान्धकारम्
ध्वस्तेऽन्धकारे हरिरप्रमेयो योगेन गत्वा ह्यपरं शरीरम् १७८
दैत्येन युद्धं स चकार सार्धं देहेन चान्येन च युद्धमैक्षत्
विष्णोश्च दैत्येन बभूव युद्धं घोरं द्रुमैः पर्वतमस्तकैश्च १७९
युद्धं च ते देवगणाः समस्ता ----- चक्रेण देवप्रवरः समान्ते
चिच्छेद दैत्यस्य शिरः प्रसह्य ब्रह्मा ततस्तोषमुपाजगाम १८०
ब्रह्मा विष्णुश्च रुद्रश्च येषु शिखरेष्ववस्थिताः
तेषां च नामधेयानि ददुः स्वानि महीतले १८१
ऊचूश्च शृङ्गप्रवरान् शैलेन्द्रस्य महात्मनः
स्नात्वैव क्रमसाराख्ये सरस्यस्मिन् नरोत्तम १८२
द्रष्टा यः खलु युष्माकं दृष्टास्तेन वयं त्रयः
भविष्यामो ध्रुवं शैले त्रिदिवं च प्रयास्यति १८३

बृहदश्वः
तानेतान्शिखरान् पश्य ब्रह्माविष्णुमहेश्वरान्
नौबन्धशिखरो यस्तु स एव नृप शंकरः १८४
दक्षिणेऽस्य हरिः पार्श्वे वामे ब्रह्मा प्रकीर्तितः
एतान् हि दृष्ट्वा मुच्युन्ते येऽपि दुष्कृतिनो जनाः १८५
योऽसौ विष्णुपदो नाम क्रमसारे प्रकीर्तितः
तस्योदगाश्रमं चक्रे ब्रह्मा देववरः स्वयम् १८६
पश्चार्धे चाश्रमं चक्रे कश्यपो भगवानृषिः १८७
यस्मिन् देशे स्थितो विष्णुर्विजयं प्राप्तवांस्तदा
तत्राश्रमपदं चक्रे महादेवः स्वयं प्रभुः १८८
तस्यैव चापरे भागे ह्यनन्तस्त्वाश्रमं महत्
चकार हलभृच्छ्रीमान् वासुदेवमते स्थितः १८९
महादेवाश्रमाद् भागे पश्चिमेऽर्कनिशाकरौ
चक्रतुस्त्वाश्रमौ पुण्यौ सुरम्यौ देवपूजितौ १९०
पादोनयोजनं गत्वा महादेवाश्रमाद्धरिः
आत्मनस्त्वाश्रमं चक्रे नरसिंहेति विश्रुतम् १९१
अन्ये तु देवाः सरसि वितोयेऽथ पृथक् पृथक्
ते चक्रुराश्रमांस्तत्र ऋषयश्च तपोधनाः १९२
आश्रमाणि तथा नद्यश्चक्रुस्तीर्थान्यनेकशः
गन्धर्वाप्सरसो यक्षाः शैलेन्द्राश्च सगुह्यकाः १९३
कृतालयौ तत्र जगत्प्ल्रधाना वुपेन्द्ररुद्रौ सह पद्मजेन
कृतालयं तत्र जगत्समग्रं देशं सपुण्यं परमं पवित्रम् १९४
जलोद्भवासृजा मत्तस्तदा चक्रः सुदर्शनः
बभ्राम देशं शून्यं तं तं च जग्राह शङ्करः १९५
चक्रहस्तो जगामाथ यत्र देवो जनार्दनः
तमुवाच हरिर्देवं प्रहसन्शंकरं तदा १९६
चक्रं मे दीयतां देव दैत्यसङ्घविनाशनम्

प्रहसन्तमुवाचाथ हरिं हासेन शङ्करः १९७
स्वच्छन्दोऽयं मया प्राप्तो भ्रममाणो यदृच्छया
प्रतिग्रहेण दास्यामि तव चक्रं जनार्दन १९८
एवमस्त्विति जग्राह तं चक्रं मधुसूदनः
अस्मिन् प्रदेशे राजेन्द्र यत्र वर्तसि साम्प्रतम् १९९
तादृशं परिहासं तु कृत्वा देववरो हरिः
तादृशीं कारयामास प्रतिमामात्मनस्तथा २००
शम्भोर्देव्याश्च राजेन्द्र यथावृत्तमरिन्दम
तादृशं स विधानं तु कारयित्वा जनार्दनः २०१
जलोद्भवशिरस्यस्मिंस्कृतवांनास्पदं हरिः
इमां मनुजशार्दूल यस्यां संनिहितावुभौ २०२
केशवश्च शिवश्चैव सर्वकल्मषनाशनौ
कृतदेवप्रतिष्ठानं देवदेवं जनार्दनम् २०३
ऋषयो देवता नागा गन्धर्वाप्सरसां गणाः
द्रष्टुं सर्वे समाजग्मुर्जलोद्भवशिरस्यथ २०४
देवर्षिनागमुख्येष्वधिष्ठितेष्वथ कश्यपः
उवाच वरदं विष्णुं देशोऽयं देव मानुषैः २०५
वसतां रमणीयश्च पुण्यश्च भविता तथा
कश्यपे ब्रुवति त्वेवं नागा वचनमब्रुवन् २०६
न वयं मानुषैः सार्धं वसामो मुनिपुंगव
तानुवाच ततः क्रुद्धः कश्यपो वै प्रजापतिः २०७
मम वाक्यमनादृत्य यस्माद् धृष्टं प्रभाषथ
तस्मात् पिशाचैः सहिता वसध्वं नात्र संशयः २०८
एवमुक्ते कश्यपेन नीलः प्राञ्जलिरब्रवीत्
एते क्रोधवशाद् ब्रह्मन् न विजानन्ति किंचन २०९
कश्यपस्तमुवाचाथ ऋषिः परमधार्मिकः
वालुकार्णवमध्ये तु द्वीपः षड्योजनायतः २१०

तत्र सन्ति पिशाचा ये दैत्यपक्षाः सुदारुणाः
तेषां तु निग्रहार्थाय पिशाचाधिपतिर्बली २११
निकुम्भो नाम धर्मात्मा कुबेरेण तु योजितः
चैत्र्यां याति सदा योद्धुं पिशाचैर्बहुभिः सह २१२
पञ्चकोटचः पिशाचानां निकुम्भस्यानुयायिनाम्
गत्वा निकुम्भस्तैः सार्धं षरामासान् युद्धचते सदा २१३
तत्रापि कोटयः पञ्चैव पिशाचानां दुरात्मनाम् २१४
येऽधिकाः कोटिदशकान् नाशमायान्ति ते सदा
पक्षयोरुभयोर्नील षड्भिर्मासैः सदैव तु २१५
निकुम्भः पुनरायाति पञ्चकोटिसमो बली
शुक्लाश्वयुक्पञ्चदश्यां नित्यं देवप्रसादतः २१६
हिमाचले तु षरामासान् स सदा वसते सुखी
अद्य प्रभृति षरामासांस्तस्येह वसतिर्मया २१७
दत्ता तु सहितास्तेन ससैन्येनेह वत्स्यथ
षरामासान् मानवैः सार्धं निकुम्भे निर्गते सदा २१८
एवमुक्तस्तदानीलः पितरं प्राह धार्मिकः
नित्यमेव हि वत्स्यामो मानुषैः सहिता वयम् २१९
न पिशाचैश्च वत्स्यामो दारुरौर्दारुराप्रियैः
एवं ब्रुवति नागेन्द्रे नीले विष्णुरभाषत २२०
मुनिवाक्यं तु भविता नील एकं चतुर्युगम्
ततः परं तु सहिता मनुष्यैरेव वत्स्यथ २२१
अल्पवीर्याः पिशाचाश्च भविष्यन्तीह सर्वदा
वीर्योपता गमिष्यन्ति षरामासान् वालुकार्णवम् २२२
नागस्य यस्य ये स्थानेनिवसिष्यन्ति मानवाः
ते तं संपूजयिष्यन्ति पुष्पधूपानुलेपनैः २२३
नैवेद्यैर्विविधैर्धूपैः प्रेक्षादानैः सुशोभनैः २२४
त्वयोक्तं च सदाचारं पालयिष्यन्ति ये नराः

तेऽस्मिन् देशे भविष्यन्ति पशुधान्यसमन्विताः २२५
कः प्रजापतिरुद्दिष्टः कश्यपश्च प्रजापतिः
तेनेदं निर्मितं देशं कश्मीराख्यं भविष्यति २२६
कं वारि हलिना यस्माद्देशादस्मादपाकृतम्
कश्मीराख्यं ततोऽप्यस्य लोके नाम भविष्यति २२७
यैवोमा सैव कश्मीरा यस्मात्तस्माद् भुजंगम २२८
विशोकेत्यभिविख्याता बृंहिता च तथा मया
स्त्रीरूपधारिणी भूत्वा वृद्धतीर्थे निवत्स्यति २२९
वासुकेर्नागराजस्य तस्मिंस्तीर्थवरे सदा
वसतिर्भविता नाग तत्रस्थं तं च पूजय २३०
ममांशः स तु नागेन्द्र नागानामीश्वरेश्वरः
तस्याज्ञां विफलां कुर्वन् मम हस्ताद् विनश्यति २३१
नागानामालयं नाग नाम्ना भोगवती पुरी
योगी भूत्वा स नागेन्द्रस्तत्रेहापि कृतालयः २३२
प्रधानेन शरीरेण भोगवत्यां तु वासुकिः
पालयन् वत्स्यते नागांस्त्वं वसेह सदानघ २३३
एवमुक्त्वा तदा विष्णुः प्रययावीप्सितां गतिम्
देवर्षिनागगन्धर्वाः प्रययुस्ते यथागताः २३४
नानादेशसमुत्थैस्तु ततः प्रभृति मानवैः
षण्मासान् वसते देशः षण्मासान् पिशिताशनैः २३५
कृत्वा मनुष्या राजेन्द्र धान्यसस्यादिसङ्ग्रहम्
आदायाज्ञां विनिर्यान्ति चैत्र्यामायान्ति सर्वदा २३६
एवं निविष्टां कश्मीरां दृष्ट्वा हृष्टस्तु कश्यपः
आराध्य शङ्करं देवमुमादेवीमचोदयत् २३७
देशस्य पावनायास्य तोयदानेन पार्थिव
सा वितस्तेति विख्याता नदी पापप्रणाशिनी २३८
आराध्य केशवं देवं तथा लक्ष्मीमचोदयत्

देशस्य पावनायास्य सा विशोकेति कीर्तिता २३९
अदितिर्देवमाता च कश्यपेन प्रचोदिता
त्रिकोटिर्नामतो भूत्वा नदी देशे प्रसर्पति २४०
शक्रपत्नी शची या च सापि कश्यपचोदिता
नाम्ना हर्षपथा जाता देशेऽस्मिन् पापसूदनी २४१
दितिश्चन्द्रवती जाता ऋषेर्वचनकारिणी
स्वमंशं यमुनादेवी वितस्तायै समर्पयत् २४२
एवं कश्यपवाक्येन देवदानवमातरः
देवपत्न्यस्तथा पुण्याः सरिद्रूपत्वमागताः २४३
तथा कश्यपवाक्येन तीर्थसागरनिम्नगाः
कश्मीरायां तदा जग्मुः सांनिध्यं च महीपते २४४
एवं नरेन्द्र कश्मीरा प्राप्ते वैवस्वतान्तरे
समुत्पन्ना महापुण्या हरभार्या सती शुभा २४५
कश्मीरायां तथा राजा त्वया ज्ञेयो हरांशजः
तस्यावज्ञा न कर्तव्या सततं भूतिमिच्छता २४६
गोनन्दः
कथं सती शची गङ्गा अदितिर्यमुना दितिः
सरित्वमिह संप्राप्ता या च देवी करीषिणी २४७
बृहदश्वः
कदाचित् कश्यपं द्रष्टुं ययुर्देव्यः प्रकीर्तिताः
तास्तत्र चोदयामास कश्यपो भगवानृषिः २४८
कश्मीरा नाम सुभगो देशो वै निर्मितो मया
तं देशमम्बुदानेन भावयध्वं शुचिस्मिताः २४९
अदितिश्च दितिश्चैव शची गङ्गा च निम्नगाः
एवमस्त्वित्यभाषन्त नोमा न च करीषिणी २५०
आराधयामास तदा सत्यर्थेन तु शङ्करम्
अथोवाच हरो भार्यां कुरु कश्यपभाषितम् २५१

ततोऽवोचदृषिं देवी स च देशस्तनुर्मम
यदा तदा पूत एव किं मया तत्र कारणम्  २५२
कश्यपः
पिशाचैः सह सम्पर्कस्तत्र नित्यं यदा नृणाम्
तदा तेषां मतिः पापात् सततं नापसर्पति  २५३
अपूज्याः सर्वदेशेषु दुराचारा मलैर्वृताः  २५४
पापं कृतं च यत् क्षेत्रे तन् मे गुरुतरं मतम्
त्वयैव पापं यत् तेषां शमनीयं वरानने  २५५
बृहदश्वः
इति तथ्यं विदित्वा सा कृपया परया युता
उवाच देवी भर्तारं चारुचन्द्रनिभानना  २५६
रसातले नदीरूपं करिष्यामि जगद्गुरो
कुरु शूलप्रहारं त्वं नीलवेश्मसमीपतः  २५७
यत्रासील्लाङ्गलमुखं प्राक् प्रभो शैलदारणे
तेन शूलप्रहारेण निष्क्रम्याहं रसातलात्  २५८
हलमार्गेण यास्यामि यावत् सिन्धुर्महानदः
तथा चक्रे हरो देवस्तथा चक्रे सती शुभा  २५९
तस्या नाम वितस्तेति कृतवान् शङ्करः स्वयम्
वितस्तिमात्रं गर्तं तु शूलेन कृतवान् हरः  २६०
रसातलगता येन निष्क्रान्ता सा सरिद्वरा
तस्माद् वितस्तेति कृतं नामैतस्याः स्वयंभुवा  २६१
ततस्तु सर्वदेशेषु जनः शुश्राव पार्थिव
सती देवी नदी भूत्वा कश्मीराया विनिर्गता  २६२
महापातकसंयुक्तस्तस्यां स्नातुं तदा जनः
आजगाम भयात्तेषां शूलखातनियोजनात्  २६३
रसातलं जगामाशु पुनस्तामेव कश्यपः
प्रसाद्योन्मज्जयामास पञ्चहस्तसमीपतः  २६४

पञ्चहस्तस्य नागस्य भवनात्तां विनिर्गताम्
गव्यूतिमात्रमायातां कृतघ्नस्तां ददर्श वै २६५
सा च दृष्टा कृतघ्नेन त्वन्तर्धानं गता पुनः
भूयः कश्यपवाक्येन चोदिता निम्नगोत्तमा २६६
तच्चक्रात् क्रोशमात्रे तु प्रददौ दर्शनं तदा
नित्रस्त्रीगामिना दृष्टा ततोऽदर्शनमागता २६७
भूयः कश्यपवाक्येन नरसिंहाश्रमे शुभा
उन्ममज्ज नदी विप्रैः स्तूयमाना सहस्रशः २६८
क्रोशमात्रे ततो दृष्टा ब्रह्मघ्नेन महानदी
अन्तर्धानं जगामाशु ततस्तामाह कश्यपः २६९
नमोऽस्तु ते पर्वतराजकन्ये
नमोऽस्तु तुभ्यमृषिवर्यजुष्टे ।
नमोऽस्तु तुभ्यं हरसङ्गलब्ध-
पवित्रभावे वरदे वरेण्ये २७०
सुपुण्यतोये सुरयोषिताभिश्चिक्रीडमानाभिरुपेततीरे
देवद्विजाद्यैरुपगूह्यमाने सुशीततोये विमले विशोके २७१
येषां हि भीत्या प्रपलायसि त्वं त्वद् दर्शनाद् देवि विमुक्तपापाः
वृत्ता नरास्ते गतसर्वपापाः त्वां भासयन्तः प्रभया महत्या २७२
सप्तार्चिदग्धस्य यथा शुचित्वं त्वद्दर्शनाद् देवि तथा शुचित्वम्
सर्वं पवित्रं भवतीह तद्वत् पापं महेशानि कुरु प्रसादम् २७३
पापानां पावनार्थाय प्रार्थितासि महानदि
तस्मात् पावय पापानि मा प्रणाशं व्रजाशुगे २७४
एवं प्रसादिता भक्त्या कश्यपेन महात्मना
उवाच कश्यपं देवी तं तथावादिनं तदा २७५
अत्यन्तपापसंयुक्तात् नाहं पवितुमुत्सहे
तदत्र प्रेरय विभो लक्ष्मीं शार्ङ्गधरप्रियाम् २७६
शक्ता हि पावने ब्रह्मंस्त्रैलोक्यस्यापि सा भवेत्

अदितिश्च दितिश्चैव या च गङ्गा महानदी २७७
अन्याश्च सर्वाः सरितस्तस्याः साम्यं न बिभ्रति
केवलं प्रार्थयस्वाद्य लक्ष्मीं केशववल्लभाम् २७८
तस्याः स वचनं श्रुत्वा प्रययौ भगवान् किल
गोविन्दमाराधयितुं श्वेतद्वीपं विहायसा २७९
गोविन्दस्त्वब्रवील्लक्ष्मीं गच्छ त्वं देवि माचिरम्
केशवेनैवमुक्ता तु लक्ष्मीः शोकसमन्विता २८०
उवाच वाक्यं प्रथमं गता तत्र सती विभो
पश्चान्मम गतायाः सा ध्रुवं नाम हरिष्यति २८१
एवं सशोकां विज्ञाय कश्यपस्त्वब्रवीत् पुनः
त्वमेव परमा शक्तिर्बहुभिर्मूर्त्तिभिः स्थिता २८२
क्षीरोदकन्ये विरजे पवित्रे मङ्गलास्पदे
त्वमेव देवि कश्मीरा त्वमेवोमा प्रकीर्तिता २८३
त्वमेव सर्वदेवीनां मूर्तिभिर्देवि संस्थिता २८४
वैतस्तम्भस्तव तोयमिश्रं मध्वमृताढ्यं च यथा तथास्तु
स्नातास्त्वदम्भस्यपि पापमग्नाः सद्यो विमुक्ता विमली भवन्तु २८५
एवं स्तुता कश्यपेन विशोका समपद्यत
चिन्तयामास च तदा भर्तृवाक्यं ध्रुवं मया २८६
कर्तव्यमृषिवाक्यं च किं विचारेण वै मम
नदी भूत्वा जगामाशु कश्मीरा वाक्यमब्रवीत् २८७
व्रज शीघ्रं यावदिह त्वत्प्रतीक्षा सती स्थिता
यावत् सा प्रथमं देशं न पावयति सुन्दरि २८८
तावत् पावय तोयेन तव नाम भविष्यति
तस्यास्तद् वचनं श्रुत्वा विशोका समपद्यत २८९
तस्माद् विशोकेति नदी सततं कथ्यते जनैः
मनोजवापि कश्मीरा सत्यै देव्यै न्यवेदयत् २९०
लक्ष्म्या विचेष्टितं श्रुत्वा सती च श्रुतविस्तरा

हृष्टा मार्गेण चोत्तस्थौ धौम्याश्रमसमीपतः २९१
आखोर्बिलेन शून्यत्वाद्विशोका चाप्यनन्तरम्
आजगाम वितस्तां च ददर्श पुरतः स्थिताम् २९२
दृष्ट्वा वितस्तां गतमत्सरा सा जगाम योगं च तया विशोका
पूर्वगता तत्र तदा वितस्ता जग्राह नाम क्षितिपप्रधान २९३
कश्मीरां तु तदा क्रुद्धा विशोका त्वशपत् प्रभो २९४
उपक्षीर्णानृतेनाद्य त्वया यस्मादहं खले
सती च श्राविता यस्मात्त्वया मम विचेष्टितम् २९५
तस्मात्ते प्रायशो भावी जनः खल्वनृते रतः
अपूजनीयो लोकेषु मलवान् कर्मकृत् तथा २९६
यन्मे मानं हृतं सत्या न मे व्रीडात्र जायते
यैवाहं सैव कश्मीरे सती देवी न संशयः २९७
सती लक्ष्मीसमेता तु पावयन्ती ततो जनम्
जगाम हलमार्गेण मन्दंमन्दं सरिद्वरा २९८
अदितिदेवमाता तु त्रिकोटीत्यभिविश्रुता
संयोगं सहिता देव्या ततः प्राप्ता वितस्तया २९९
ततः शची शक्रपत्नी नाम्ना शक्रपथा नदी
ततश्चन्द्रवती नाम दितिर्दैत्यारणिर्नृप ३००
एवं क्रमेण या देवी गृह्णन्त्यथ सरिद्वराः
जगाम गङ्गया सार्धं संयोगं सिन्धुना सह ३०१
वैतस्तमम्भस्सह सैन्धवेन युक्तं यथा क्षीरमिवामृतेन
लावण्ययुक्तं च यथैव रूपं शीलेन युक्तं च यथा श्रुतं स्यात् ३०२
शौर्यं यथा स्याद् विनयेन युक्तं धर्मं यथा स्याद् द्रविणेन युक्तम्
मृत्सा युता वा मृजयैव राजन् कामं यथा स्यान् मनसोपपन्नम् ३०३
रत्नं यथा स्यात् कनकेन युक्तं
आयुर्यथा स्वास्थ्ययुतं नृवीर ।
सम्मानयुक्तं च यथैव लाभं

तथा तु सा तत्र तदा बभूव ३०४
तपनस्य सुता देवी गङ्गा स्नेहेन यन्त्रिता
बहुमानान्मुनेर्भक्त्या स्वेनांशेन व्यवर्धयत् ३०५
वितस्तां तु सरिच्छ्रेष्ठां सर्वकल्मषनाशिनीम्
गङ्गगा सिन्धुस्तु विज्ञेया वितस्ता यमुना तथा ३०६
स प्रयागसमो देशस्तयोर्यत्र तु सङ्गमः
गङ्गातोयमथादाय गङ्गां तु यमुनाब्रवीत् ३०७
प्रयागेऽपहृतं नाम त्वया मे वरवर्णिनि
कश्मीरायां तथा नाम मया चापहृतं तव ३०८
तामब्रवीत्ततो गङ्गा भूय एव मया तव
हर्तव्यं नाम सुभगे यदाहं सिन्धुसंज्ञिता ३०९
बृहदश्वः
इति तथ्यं सतीज्ञात्वा हलमार्गात्तु सिन्धुगा
हिमालयान्न प्रययौ पाटितात्मा परं नदी ३१०
पुनस्तां तु महाभागामृषिः प्रोवाच कश्यपः
अवश्यं हलमार्गेण गन्तव्यं सुभगे त्वया ३११
अन्यथा देश एवायं सरस्त्वमुपयास्यति
भूयो भूयश्चोद्यमाना कश्यपेन सरिद्वरा ३१२
क्रोधात्ततो विनिष्क्रान्ता हलमार्गेण तेन सा
तस्मिन् देशे प्रसन्नापि दृश्यते कलुषा नदी ३१३
कश्यप उवाच
वितस्ताख्या सरिद्रूपा देवि त्वं पर्वतात्मजे
तपस्विनी परा शर्वाच्छर्व पत्न्यसि नो नदी ३१४
अद्रिवत्सासि भद्रं ते तद्देहाच्छृङ्गिणी नदी
शम्भुनोढासि रुद्राणी स्त्रवन्त्यसि मयार्थिता ३१५
त्वय्यर्पितशरीरा ये पापिष्ठाः स्वर्गता अपि
दृष्ट्वा रमन्ते स्वं देहमुह्यमानं तवोर्मिभिः ३१६

विस्मयं ते नरा जग्मुर्दृष्ट्वा तं देहमात्मनः
स्वर्गताः स्मोऽथ चोमायां क्रीडामो जलमध्यगाः  ३१७
तवोद्गारैस्तरङ्गाख्यैः देवि मारुतचोदितैः
शीतैः शीकरजैर्नृणां नारकोऽग्निः प्रशाम्यति  ३१८
प्रदीपादीपिभिर्देवि तथा वर्तिभिरूर्मिभिः
त्रिःसप्तनारकं वह्नि नृणां शमयसेऽद्रिजे  ३१९
स्नानं ये तु करिष्यन्ति तव पुण्ये नरा जले
ब्रह्मलोकं गमिष्यन्ति महापातकिनोऽपि ते  ३२०
यामीं तु यातनां घोरां भ्रूकुटिभङ्गचोदिताम्
स्वप्नेऽपि पश्यन्ति ते न ये स्नाताप्सु सकृत्तव  ३२१
तव भक्तस्य विप्रस्य नित्यं कर्मानुतिष्ठतः
मोक्षदं मुनयः स्नानं गङ्गायां स्वर्गदं विदुः  ३२२
अतिप्रभावयुक्तासि त्रैलोक्यस्यापि पावनी
जनित्री सर्वदेवानामुमा देव्यसि नो नदी  ३२३
देवानां त्वं धृतिर्देवि देवानां भारती यथा
तृप्तिश्च सर्वभूतानां निम्नगे त्वं सदा भुवि  ३२४
प्रसादं कुरु मे देवि निर्गच्छ भवनादितः
अविक्षुब्धेन मनसा देशस्यास्य हिते रता  ३२५
अर्धं देहाद्धरस्य त्वं देवपत्न्यसि नो नदी
सिन्धुसंगमनं यावद्धावन्ती याहि मेऽर्थिता  ३२६
पतिस्ते शङ्करस्त्वेको नापरोऽब्धिरितस्ततः
सिन्धुसंगमनेनाशु व्रजस्व स्वपतिं शिवम्  ३२७
निशम्यैवं पुनर्देवी सस्मारोक्तं यथा स्वयम्
स्मृत्वा सोत्कण्ठिता भर्तुर्गमने मतिमादधे  ३२८
ततो वेगेन महता सीमन्तमिव कुर्वती
हिमाचलस्य प्रययौ तोयशैलोपमा नदी  ३२९
ततस्तु संगता नद्या कृष्णया सह पार्थिव

तथा सरिद्वराभिश्च शतशोऽथ सहस्रशः ३३०
स्वैराजकानां मध्येन मात्राणां चैव भागशः
भोगप्रस्थमतिक्रम्य गङ्गया सह संगता ३३१
एषा हि पापशमनी वितस्ता निम्नगोत्तमा
कश्यपस्य तु वाक्येन लक्ष्म्या सह गता क्षितिम् ३३२
अदितिश्च दितिश्चैव शची च मनुजेश्वर
तपनस्य सुता या च या च गङ्गा सरिद्वरा ३३३
एवं वसन्त्यां प्रययौ कश्मीरायां चतुर्युगम् ३३४
पूर्णे चतुर्युगे तस्मिन् कृत्वा धान्यादिसङ्ग्रहम्
आश्वयुज्यामतीतायां निर्ययुर्मानवा बहिः ३३५
काश्यपश्चन्द्रदेवाख्यो वृद्धो ब्राह्मणपुङ्गवः
न निर्जगाम निर्वेदाच्चोदितोऽर्थेन भाविना ३३६
क्रीडानिमित्तं च भयान्निकुम्भस्य न घातितः
ब्राह्मणेन पिशाचास्तु चिक्रीडुस्तेन ते तदा ३३७
रज्जुबद्धेन तु यथा पक्षिणा नृप दारकाः
कल्यमानः पिशाचैस्तु निर्वेदं परमं ययौ ३३८
हिमेन शीतेन तथा पिशाचैः संपीड्यमानो द्विजवृद्धवर्यः
बभ्राम तत्रैव विमूढचेता भ्रमन् ययौ यत्र स नागराजः ३३९
यस्मिन् देशे त्वनन्तेन हलं पूर्वं निवेशितम्
तत्र नीलस्य वसतिः पूर्वमेव सुभाविता ३४०
एतस्मिन्नेव काले तु नीलो नागपतिर्विभूः
सेव्यमानो निकुम्भेन पिशाचेन महात्मना ३४१
नागैश्चात्युल्बणैर्भीमैः पर्यङ्कवरमाश्रितः
आस्ते गिरिवरस्याधो धनदस्य महात्मनः ३४२
नागास्तं नागराजानं नागकन्याश्च भूरिशः
उपासन्त महात्मानं कश्मीरायां कृतालयाः ३४३
केचित् स्तुवन्ति राजानं केचिद् वीजन्ति पन्नगाः

केचिद् वरासनगतं पर्युपासन्ति धार्मिकम्  ३४४
तेषां मध्यगतं नीलं नीलाञ्जनचयोपमम्
मुकुटेनार्कवर्णेन कुण्डलैश्च निराजितम्  ३४५
विद्युद्द्योतितवर्णेन वाससैकेन शोभितम्
चन्द्ररश्मिनिकाशेन तथा चीनांशुकेन च  ३४६
वितानेन विचित्रेण किङ्किणीजालमालिना
तथा फणशतैर्भीमैः सप्तभिः संविराजितम्  ३४७
रत्नोज्ज्वलैर्दीप्तरत्नैर्ज्वालामालासमाकुलम्
तं दृष्ट्वा चन्द्रदेवस्य नीलोऽयमभवन्मतिः  ३४८
नूनं प्रसादात्तस्यैव भुजङ्गाधिपतेः प्रभोः
सोपसर्प्य द्विजो नागं कृत्वा प्राध्ययनं पुरः  ३४९
जानुभ्यामवनिं गत्वा तदा स्तोत्रमुदीरयत्  ३५०
चन्द्रदेवः
नमस्ते नागराजेन्द्र नील नीलोत्पलद्युते
नीलमेघचयप्रख्य नीलतोयकृतालय  ३५१
फणानां त्वं शतैर्नाग शोभसे सप्तभिः सदा
सप्तसप्तिरिवार्चिष्मान् राजसे त्वं गभस्तिभिः  ३५२
त्वं नील नीलार्थविनीतपापैर्देवेश देवैरपि दृश्यसे स्वैः
नागेन्द्र भोगीन्द्र इवाम्बरस्थो ध्यानेन विद्वद्भिरिवामृताख्यः  ३५३
त्वं नील यज्ञेश इवासन्मस्थो वेदार्थविद्भिर्विविधैर्विधानैः
संसारकार्येषु सुयागकृद्भिराराध्यसे मोक्षफलाय विप्रैः  ३५४
नागेन्द्र नीलार्चिरिवामरेन्द्रैर्विज्ञायसे सूर्य इवाम्बरस्थः
त्वं नील नीलार्चिरिव ज्वलानो भक्तस्य कार्याणि च साधयानः  ३५५
दृष्टो मया हेतुभिरापतन्तं सर्वस्य जन्तोर्वससे यतोऽद्य
स्मृतस्ततो मोक्षय मेऽतिदुःखात् त्रायस्व विप्रस्य नमो नरेन्द्र  ३५६
त्वं नील नीरौघचयप्रकाशो विराजसे विष्णुरिवामरेशः
विधेर्विधाता रमसे यमेशं त्वं वासुदेवप्रणतः सदैव  ३५७

त्वां नील नीलाम्बर नीलनेत्र आकाशवत् सर्वगतं सुरेशम्
ध्यात्वा नरो योऽप्यजितेन्द्रियो वा नागेन्द्र मुच्येत तव प्रसादात्  ३५८
नील त्वामेव वेदार्थे जगुर्वेदाः सनातनम्
ध्येयं वह्नौ मुमुक्षूणां कामिनां चार्थसाधनम्  ३५९
त्वत्प्रकाशं यतो ब्रह्म निष्कलं निर्मल परम्
सूक्ष्मतो व्योमनिर्दिष्टं सर्वगात्रैरकृत्रिमम्  ३६०
अकिञ्चन्यावदस्तत्त्वमतिसूक्ष्मस्य नो पृथोः
अर्थाश्रयान् महार्थत्वं तव तस्याक्षरस्य च  ३६१
कद्रूः पुत्रसहस्रेण नागराजेन्द्र शोभिता
त्वया तु राजतेऽत्यर्थं विष्णुनैवादितिर्यथा  ३६२
त्वमेव तपसात्यर्थं तथा विद्योतसे प्रभो
तोयं हिमं शीकरं च तथा मुञ्चसि धार्मिक  ३६३
प्रजापतिः कश्यपो हि सर्वभूतपिता प्रभो
त्वया तु शोभतेऽत्यर्थं पुत्रेणात्यन्तधार्मिक  ३६४
त्वयि धर्मश्च सत्यं च क्षमा च सततं प्रभो
देवासुरविमर्देषु शतशोऽथ सहस्रशः  ३६५
त्वया विनिहता दैत्या देवब्राह्मणकण्टकाः
वरदस्त्वं वरेण्यश्च सुरारिबलहा प्रभो  ३६६
भक्तानुकम्पी भक्तश्च देवदेवे जनार्दने
तस्यातिदयितश्चासि यथा नागः स वासुकिः  ३६७
धनदस्ते सखा नाग यथा शर्वस्य नित्यदा
धनदश्चासि भक्तानां धनेश इति विश्रुतः  ३६८
नागानां त्वं गतिर्नित्यं देवानामिव वासवः
भक्तिमानस्मि ते नित्यं तच्च जानासि धार्मिक  ३६९
नील उवाच
स्वागतं ते द्विजश्रेष्ठ दिष्ट्याऽसि मेऽन्तिकम्
अर्चनीयोऽसि विप्रेन्द्र ह्यतिथिस्त्वं मतो मम  ३७०

वरं वरय भद्रं ते यथेष्टं मनसि प्रियम्
गृहं च मे तथा पश्य तत्र आस्स्व च यथासुखम् ३७१
चन्द्रदेवः
अवश्यं मे वरो देयस्त्वया नागेन्द्रसत्तम
वरयामि वरं देव तं मे त्वं दातुमर्हसि ३७२
कश्मीरायां जनो नित्यं वसतां भीमविक्रम
क्लिश्यते हि सदा लोको निष्क्रमन् प्रविशन् पुनः ३७३
गृहाणीह नरास्त्यक्त्वा पुराणि विविधानि च
वसन्तु त्वत्प्रसादेन वरमेतद्वृतं मया ३७४
नीलः
एवमस्तु द्विजश्रेष्ठ वसन्त्विह नराः सदा
पालयन्तस्तु मद् वाक्यं केशवाद्यन्मया श्रुतम् ३७५
बृहदश्वः
एवमुक्त्वा तदा नीलो ब्राह्मणं स्वं निवेशनम्
नीत्वा सम्पूज्य सम्भोज्य ब्राह्मणस्य यथाविधि ३७६
कश्मीरायां वसत्यर्थमाचाराणि जगाद वै
द्विजश्चोवास षण्मासान् सुखं नीलनिवेशने ३७७
चैत्र्यां ततो व्यतीतायां प्राविशत्सर्वतो जनः
राजा वीरोदयाख्यश्च हस्त्यश्वैर्बहुभिर्वृतः ३७८
प्रविष्टे तु जने तस्मिन् द्विजो नीलेन योजितः
युवा धनौघसहितो ययौ वीरोदयं नृपम् ३७९
तस्य सर्वं यथा वृत्तं कथयामास स द्विज
राजापि सर्वलोकेषु कथयामास पार्थिव ३८०
नीलोक्तं वचनं कुर्वस्ततः प्रभृति वै जनः
उवास सततं हृष्टः कश्मीरायां कृतालयः ३८१
कृत्वा पुराणि ग्रामाणि तीर्थान्यायतनानि च
गृहाणि च विचित्राणि ह्युवास वसतिं जनः ३८२

ततः प्रभृति देशेऽस्मिन् स्वल्पं हि पतते हिमम्
जनस्तु नीलवचनं पालयत्येव नित्यशः ३८३
वैशम्पायनः
एवमुक्तः स गोनन्दो बृहदश्वेन भूभुजा
पप्रच्छ भूयस्तमृषिं जातकौतूहलस्तदा ३८४
कान्याचाराणि नीलेन चन्द्रदेवाय भार्गव
पुरा प्रोक्तानि चैतानि कथयस्व महाद्युते ३८५
बृहदश्वः
रौक्मपीठस्थितं विप्रं नागः पर्यङ्कमाश्रितः
उवाच यत्तदा राजंस्तच्छृणुष्व समाहितः ३८६
नीलः
प्रणिपत्य हृषीकेशं पराशरं गुरुं हरिम्
कश्मीरायां वसत्यर्थं वक्ष्याम्याचरणं तव ३८७
आश्वयुज्यां निकुम्भस्तु नित्यमायाति काश्यप
हत्वा पिशाचान् सङ्ग्रामे वालुकार्णवगान् बहून ३८८
पूजार्थं तस्य कर्तव्या कौमुदी तां निबोध मे ३८९
सुधावदाताः कर्तव्याः पूजिताश्च तथा गृहाः
पुम्भिः स्नानानुलिप्तैश्च भाव्यं बालैर्विशेषतः ३९०
न भोक्तव्यं दिवा चापि तद्दिनं पुरुषैः सदा
केवलं भोजनं देयं बालातुरजनस्य च ३९१
सफलैः पुष्पसङ्घातैः पूजनीयास्तदा गृहाः
चन्द्रोदये ततः प्राप्ते सम्प्रज्वाल्य हुताशनम् ३९२
रुद्रं चन्द्रमुमां स्कन्दं नासत्यौ नन्दिनं तथा
पूजयित्वार्घमाल्यादिनैवेद्यैश्च पृथक् पृथक् ३९३
ततः पूजा निकुम्भस्य कर्तव्या कृसरेण तु
आदित्यपुत्रो रेवन्तः साश्वैः पूज्यश्च मानवैः ३९४
पूजनीया च सुरभिर्गोमद्भिः पुरुषैस्तथा

येषां च छागलाः सन्ति तैश्च पूज्यो हुताशनः ३९५
औरभ्रिकैस्तथा देवः पूजनीयो जलाधिपः
येषां सन्ति करीन्द्राश्च तैश्च पूज्यो गणाधिपः ३९६
कृत्वाग्निहवनं पश्चात्पूजयित्वा द्विजोत्तमान्
प्रयुज्य चात्मनः पूजां भोक्तव्यं मांसवर्जितम् ३९७
सार्धं भृत्यैस्तथा मित्रैर्दारापत्यादिभिस्तथा
वस्तव्या च निशा सैव वह्नेः पार्श्वरतैर्नरैः ३९८
शङ्खवादरवोन्मिश्रैर्गीतवाद्यैश्च नित्यशः
नेया भवति राजेन्द्र तथा प्रेक्षणकैः शुभैः ३९९
तथा प्रभातसमये स्वनुलिप्तैः स्वलङ्कृतैः
वह्निपूजा च कर्तव्या मङ्गलालभनं तथा ४००
भोक्तव्यं सह मित्रैश्च क्रीडितव्यं यथासुखम्
सुप्तव्यं तां तथा रात्रिं द्वितीयायामनन्तरम् ४०१
कर्दमेनानुलिप्ताङ्गैः क्रीडितव्यं तथा नरैः
सुहृदः कर्दमेनापि लेपयद्भिरितस्ततः ४०२
कामार्थवादिभिस्सर्वैस्तल्लिङ्गार्थप्रबोधकैः
गन्तृगम्यविशेषैश्च विविधैश्च सुभाषितैः ४०३
अश्लीलं वदमानैश्च त्वाक्रोशद्भिस्तथा द्विज
तस्मिन्नहनि पूर्वाह्णे निकुम्भस्यानुयायिनः ४०४
आविशन्ति नरान् सर्वान् पिशाचा घोरदर्शनाः
यश्चैवं कुरुते तस्य ह्यपराह्णे तदा तनुम् ४०५
त्यक्त्वा स्नातस्य गच्छन्ति शपन्ते चाप्यकारणम्
ततः स्नातैश्च कर्तव्यं केशवस्यार्चनं नरैः ४०६
सम्पूज्य विप्रान् भोक्तव्यं ननुलिप्तैः स्वलङ्कृतैः
मित्रानुजीविभिः सार्धं दारापत्यादिभिस्तथा ४०७
ततः प्रभृति षण्मासान् स्वेषु वेश्मसु मानवैः
अग्निः सन्निहितः कार्यो रात्रौ विप्रैर्विशेषतः ४०८

रात्रौ दीपश्च दातव्योमासमेकं बहिर्गृहात्
यावत्कार्त्तिकमासस्य पौर्णमासीं द्विजोत्तम ४०९
एषा तु कौमुदी नाम तिथिः कार्या शिवप्रदा
ततः पक्षे व्यतीते तु कर्त्तव्या सुखसुप्तिका ४१०
पञ्चदश्यां यथा विप्र तथा मे गदतःशृणु
तस्यां दिवा न भोक्तव्यं बालातुरजनं विना ४११
सूर्ये त्वस्तमनुप्राप्ते पूजयित्वा करीषिणीम्
दीपवृक्षास्ततो देया देवतायतनेषु च ४१२
चतुष्पथश्मशानेषु नदीपर्वतदेश्मसु
वृक्षमूलेषु गोष्ठेषु चत्वरेष्वापणेषु च ४१३
वस्त्रैश्चैवापणाः सर्वे कर्तव्या द्विज शोभिताः
दीपमालापरिक्षिप्ते प्रदेशे तदनन्तरम् ४१४
स्वलङ्कृतेन भोक्तव्यं द्विजेन्द्र नववाससा
सुहृद्भिर्बन्धुभिः सार्धं ब्राह्मणैश्चानुयायिभिः ४१५
ततः प्राप्ते द्वितीयेऽह्नि स्वनुलिप्तैः स्वलङ्कृतैः
क्रीडितव्यं तदा द्यूतैः श्रोतव्यं गीतवादितम् ४१६
विशेषवच्च भोक्तव्यं पूर्वोक्तैस्तैर्जनैः सह
तस्मिन् द्यूते जयो यस्य तस्य संवत्सरः शुभः ४१७
तस्या रात्र्यां तु कर्तव्यं शय्यास्थानं सुशोभितम्
गन्धैर्वस्त्रैस्तथा धूपैरन्नैश्चैवाभ्यलङ्कृतम् ४१८
दीपमालापरिक्षिप्तं तथा धूपेन धूपितम्
दयिताभिश्च सहितैर्नेया सा च निशा भवेत् ४१९
नवैश्च वस्त्रैः पूज्याश्च सुहृत्सम्बन्धिबान्धवाः
ब्राह्मणा भृत्यवर्गाश्च चन्द्रदेव यथाविधि ४२०
एकादश्यां ततो रात्रौ शुक्लपक्षस्य मानवः
सोपवासो हरिं देवं नृत्तगीतैर्विबोधयेत् ४२१
आषाढमासि प्रतिमां केशवस्य च कारयेत्

सुप्तां तु शेषपर्यङ्के शैलमृद्धेमदारुभिः ४२२
ताम्रारकूटरजतैश्चित्रे वापि निवेशयेत्
लक्ष्म्युत्सङ्गगतौ पादौ तदा तस्य तु कारयेत् ४२३
कार्त्तिकस्य तु शुक्लान्ते कार्यं तस्य विबोधनम्
यथा तथा मे गदतः शृणुत्वं मुनिपुङ्गव ४२४
एकादश्यां तु कर्तव्यं रात्रौ जागरणं तथा
गीतैर्नृत्तैस्तथा वाद्यैर्ब्रह्मघोषैस्तथैव च ४२५
वीणापटहशब्दैश्च पुराणानां च वाचनैः
तत्कथाश्रवणैश्चान्यैस्तथा स्तोत्रप्रकीर्तनैः ४२६
प्रेक्षणीयप्रदानैश्च भूमिशोभाभिरेव च
पुष्पधूपप्रदानैश्च नैवेद्यैर्विविधैस्तथा ४२७
दीपवृक्षैश्च विविधैर्वह्निपूजाभिरेव च
भक्ष्यैरपूपैः शाकैश्च परमान्नैस्तथा फलैः ४२८
इक्षोर्विकारैर्मधुना मृद्वीका भव्यदाडिमैः
कुठेरकस्य मञ्जर्या मार्जन्या लवणेन च ४२९
रक्तसूत्रेण रक्तेन चन्दनेन सितेन च
अलक्तकेन बीजैश्च कुङ्कुमेन सुगन्धिना ४३०
सम्पूज्य प्रतिमां रात्रौ द्वितीयेऽहनि पण्डितः
स्नात्वा नदीजले पुण्ये प्रतिमां स्नापयेच्छुभाम् ४३१
उत्थितां तु परं ब्रह्मन् पूर्वद्रव्यविनिर्मिताम्
यदि चित्रनिविष्टा स्यात् प्रतिमा ब्राह्मणोत्तम ४३२
पञ्चरात्रविधानेन वेद्यामावाह्य तां बुधः
आसनस्थां यथाशक्त्या स्नापयेत्स यथाविधि ४३३
आदावाज्येन तैलेन मधुना तदनन्तरम्
दध्ना क्षीरेण च ततः पञ्चगव्येन चाप्यथ ४३४
उद्वर्तनं ततो देयं माषचूर्णं ततः परम्
ततो मसूरचूर्णं च ततस्त्वामलकानि च ४३५

रोध्रं कालेयकं चैव तगरं कर्णकं तथा
सिद्धार्थकं प्रियङ्गुं च ततो वै बीजपूरकम् ४३६
सर्वौषध्यः सर्वगन्धाः सर्वबीजानि काञ्चनम्
मङ्गल्यानि यथालाभं रत्नानि च कुशोदकम् ४३७
हस्तिदन्तोद्धृता मृच्च वृषशृङ्गोद्धृता तथा
नदीतीरात्सगोस्थानाद्वल्मीकात् सङ्गमाद्ध्रदात् ४३८
इन्द्रस्थानाच्च सरसस्तथा पर्वतमस्तकात्
एतैः संस्नाप्य देवेशं दद्याद् गोरोचनां शुभाम् ४३९
ततस्तु कलशा देया यथाशक्ति स्वलंकृताः
जातीपल्लवसम्पूर्णाः फलपूर्णास्तु काञ्चनाः ४४०
पुण्याहवेदशब्देन वीणावेणुरवेण च
सूतमागधशब्देन तथा वन्दिस्वनेन च ४४१
एवं सं नाप्य गोविन्दं स्वनुलिप्तं स्वलङ्कृतम्
सुवाससं पूजयेत जातीपुष्पैः सकुड्मलैः ४४२
धूपं च सरजो देयं दीपं दद्यात् सुशोभनम्
ततस्तु पूजयेद् देवं परमान्नैः सुशोभनैः ४४३
सान्नरत्नप्रदानैश्च पूज्या भागवतास्ततः
ततोऽग्निहवनं कार्यं विप्राः पूज्यास्त्वनन्तरम् ४४४
वासोभिर्भूषणैरत्नैर्गोभिरश्वैर्गजैर्धनैः
यथाविभवतो विप्र भोक्तव्यं तदनन्तरम् ४४५
त्रयोदश्यां ततः पूज्या जना ये रङ्गजीविनः
मल्लभट्टादयो ब्रह्मन् स्ववित्तस्यानुरूपतः ४४६
चतुर्दश्यां न भोक्तव्यं भोक्तव्यं पयसापि वा
पञ्चदश्यां ततः पूज्यो देवदेवो जनार्दनः ४४७
पौर्णमासीं तु सम्प्राप्य न भोक्तव्यं तदा दिवा
ततश्चन्द्रोदये प्राप्ते पूजनीयाश्च कृत्तिकाः ४४८
कार्त्तिकेयस्तथा खड्गो वरुणः सहुताशनः

माल्यैर्गन्धैस्तथा धूपैर्भक्ष्यैरुच्चावचैस्तथा ४४९
परमान्नैः फलैः शाकैर्वह्निसंतर्पणैस्तथा
इक्षूणां च विकारैश्च दीपवृक्षैः सुशोभनैः ४५०
कुल्माषैर्लोपिकाभिश्च द्विजानां परिपूजनैः ४५१
एवं कृत्वा तदा पूजां मासदत्तं तु दीपकम्
गृहाद्बहिस्तु यद्दत्तं पिटके तत्तु कारयेत् ४५२
अपां समीपे नीत्वा तु सभक्ष्यं तु प्रवाहयेत्
तस्य मूलं तु कर्तव्यं ततो वै चन्दनार्चितम् ४५३
क्षीरेण पूर्णं तं कृत्वा मत्स्यं तु सिकतामयम्
मुक्तानेत्रं न्यसेत्तस्मिंस्तंच विप्रे निवेदयेत् ४५४
बलीवर्दं ततो देयं श्वेतं शक्त्या विशेषतः
सर्वसस्यधरं रम्यं सर्वगन्धसमन्वितम् ४५५
सवाससं द्विजे दद्यात् कान्तारे सोपतिष्ठति
याम्यं मार्गं हि कान्तारं तेन यान्ति विपश्चितः ४५६
यावन्ति रोमकूपानि तस्य दान्तस्य काश्यप
तावद् वर्षसहस्राणि स्वर्गे मोदन्ति तत्प्रदाः ४५७
पूजयित्वा ततो विष्णुं रक्तमाल्यादिभिः स्वयम्
भोक्तव्यं गोरसप्रायं सुप्तव्यं चाप्यनन्तरम् ४५८
देवोत्थापनमेतद्धि कर्तव्यं दिनपञ्चकम्
पञ्चाहमेतच्च तथा सुप्तव्यं स्थण्डिले बुधैः ४५९
दिने दिने च स्नातव्यं नदीतोये सुशीतले ४६०
पूजनीयो हरिर्देवो ब्राह्मणाः सहुताशनाः
वर्जनीयं तदा मांसं प्रयत्नादपि काश्यप ४६१
दैत्यदानवयक्षाश्च पिशाचाः सह राक्षसैः
वर्जयन्ति तदा मांसं मांसादा दिनपञ्चकम् ४६२
एवं सम्पूज्य देवेशं सर्वकामसमन्वितम्
आयुषः परमासाद्य विष्णुलोके महीयते ४६३

स्ववित्तशक्त्या कर्त्तव्यं मयोक्तं नूनमेव तु
प्राप्नोतीदं फलं सर्वं वित्तशाठ्यं विवर्जयेत् ४६४
कार्त्तिक्यां समतीतायां सम्प्राप्ते प्रथमेऽहनि
कश्मीरा निर्मिता पूर्वं कश्यपेन महात्मना ४६५
तस्मात्तत्र दिने कार्यमुत्सवं सर्वमानवैः
स्वाशितैः स्वनुलिप्ताङ्गैः सुचित्तैः सुजनावृतैः ४६६
श्रोतव्यं गीतावाद्यं च तथा सेव्यं च मङ्गलम्
पानं च पानपैः पेयं वस्त्रं धार्यं तथा नवम् ४६७
तस्यातितोषमायाति सगणो भास्करः स्वयम् ४६८
एष एव विधिः कार्यस्तथा माघस्य सप्तमीम्
आषाढसप्तमीं चैव यशोविजयकांक्षिभिः ४६९
सप्तमीत्रितयं चैव ध्रुवमेतद् द्विजोत्तम
सप्तमीष्वथ सर्वासु सूर्यलोके महीयते ४७०
पौर्णमासीं तु तां प्राप्य मार्गशीर्षस्य मानवः
नक्ताशी पूजयेच्चन्द्रं शुक्लमाल्यादिभिस्तथा ४७१
अन्नैर्भक्ष्यप्रकारैश्च दीपदानैस्तथा फलैः
लवणानां प्रदानैश्च वह्निपूजाभिरेव च ४७२
पूजनैः ब्राह्मणानां च सुभगानां तथैव च
रक्तवस्त्रयुगं देयं सुभगा ब्राह्मणी तु या ४७३
स्वसा पितृस्वसा या च मित्रपत्नी च या भवेत्
ध्रुवमेषा तु कर्त्तव्या पौर्णमासी विचक्षणैः ४७४
कार्याश्चान्याः स्वशक्त्या वा न वा कार्या द्विजोत्तम
कान्तं रूपमवाप्नोति सौभाग्यं विपुलं स्त्रियः ४७५
स्त्रीभिर्विशेषतः कार्याः पौर्णमास्यस्तथा द्विज ४७६
यस्मिंस्तु वासरे विप्र प्रथमं पतते हिमम्
तत्र पूज्यस्तु हिमवान् हेमन्तशिशिरावुभौ ४७७
मम पूजा च कर्तव्या स्थाननागस्य चाप्यथ

फलपत्रे प्रदातव्ये नगे मेरूद्भवे तथा ४७८
बकपुष्पाणि देयानि धूपं गुग्गुलुजं शुभम्
बलिः कार्यः प्रयत्नेन कुल्माषेण द्विजोत्तम ४७९
कुल्माषभोजनं देयं सघृतं ब्राह्मणेषु च
उत्सवं च सदा कार्यं गीतनृत्तसमाकुलम् ४८०
विशेषवच्च भोक्तव्यं भोजनं च यथेच्छकम्
नवो मद्यस्तु पातव्यो मद्यपैः पतिते हिमे ४८१
श्यामा देवी च सम्पूज्या पुष्पधूपानुलेपनैः
अन्नैर्भक्ष्यैः फलैर्मूलैः स्वनुलिप्तैः स्वलङ्कृतैः ४८२
हिमोपरिनिविष्टैश्च गुरुप्रावरणाम्बरैः
मित्रभृत्याप्तसम्बन्धिसहितैश्च यथासुखम् ४८३
भोज्यं विशेषवत्कार्यं श्रोतव्यं गीतवादितम्
द्रष्टव्यं पुंश्चलीनृत्तं पूजनीयास्तथा स्त्रियः ४८४
पौषकृष्णाष्टमीं कार्यं श्राद्धं शाकैर्द्विजोत्तम
माघकृष्णाष्टमीं मांसैः फाल्गुणस्य सिताष्टमीम् ४८५
अपूपैः कारयेच्छ्राद्धं नित्यमेव समाहितः
नवमीषु च तास्वेव स्त्रीणां श्राद्धं तु कारयेत् ४८६
श्राद्धं कृत्वा प्रयत्नेन ब्रह्मचारी वसेन्निशाम्
पौर्णमासी तु पौषस्य पुष्ययुक्ता यदा भवेत् ४८७
गौरसर्षपकल्केन तदा तूत्सादितो नरः
घृतेन स्नापनं कुर्यात् स्वशरीरस्य मानवः ४८८
ततो विरूक्षितः स्नातः सर्वौषधियुतैर्घटैः
नारायणं तथा शक्रं सोमं पुष्यबृहस्पती ४८९
पूजयित्वार्घमाल्यादिनैवेद्यैश्च पृथक्पृथक्
मन्त्रैस्तथोक्तदैवत्यैः कृत्वाग्निहवनं द्विज ४९०
अहताम्बरसंवीतः स्वनुलिप्तः स्वलङ्कृतः
पूजयित्वा धनैर्विप्रान् मङ्गलालब्धिपूर्वकम् ४९१

घृतपायसमश्नीयात् पूजयित्वा द्विजोत्तमान्
संवीतमहतं कर्त्रे देयं कालविदे भवेत ४९२
एवं कृत्वा नरः पुष्टिं प्राप्नोति धनधान्यतः
स्नानमेवं विधानेन कर्तव्यं पापनाशनम् ४९३
घृतेन स्नापयेद् देवं स्वशक्त्या मधुसूदनम्
हरभक्तो हरं देवं यदा स्यादुत्तरायणम् ४९४
आज्यं दत्वा तथार्चासु कृताः शैलेन या द्विज
अर्चारूपमथाज्येन पुनरुत्सादयेन्नरः ४९५
अर्चाः पूज्यास्तथा यत्नात्साज्या मासत्रयं बुधैः ४९६
ब्राह्मणेषु च दातव्यमिन्धनं शक्तितस्तथा
तृणं दद्याद् गवामर्थे यथाशक्त्या द्विजातिषु ४९७
एवं यः कुरुते सम्यक् स रिपूनधितिष्ठति
कायाग्निदीप्तिसौभाग्यं लभते चोत्तमां गतिम् ४९८
पौष्यां तु समतीतायां कृष्णा या द्वादशी भवेत्
तस्यामुपोषितः स्नातस्तिलैर्दत्वा तिलोदकम् ४९९
कृत्वा तिलैश्च नैवेद्यं तिलैर्होमं तथैव च
तिलाश्च देया विप्रेषु सर्वपापापनुत्तय ५००
तस्यास्त्वनन्तरं ब्रह्मन् या स्यात्कृष्णचतुर्दशी
अनर्काभ्युदिते काले स्नातव्यं शीतले जले ५०१
वितस्तायां विशोकायां चन्द्रवत्यामथापि वा
तथा हर्षपथायां वा त्रिकोटयां वा द्विजोत्तम ५०२
सिन्धुं प्राप्याथवा पुण्यां तथा कनकवाहिनीम्
अन्यां वा सरितं पुण्यां ह्रदांश्चैव सरांसि च ५०३
यमस्य नाम्नि दातव्याः सप्तसप्तजलाञ्जलीः
एकैकस्मिन् द्विजश्रेष्ठ तानि नामानि मे शृणु ५०४
यमाय धर्मराजाय मृत्यवे चान्तकाय च
वैवस्वताय कालाय सर्वप्राणहराय च ५०५

स्नात्वा च पूजा कर्तव्या धर्मराजस्य वै तदा
पुष्पैः धूपैस्तथा गन्धैः कृसरेण च भूरिणा ५०६
वह्निपूजा प्रकर्तव्या घृतयुक्तैस्तथातिलैः
कृसरं भोजनीयाश्च ब्राह्मणेन्द्राः सदक्षिणम् ५०७
एवं कृत्वा नरः शुद्धो मुच्यते सर्वकिल्बिषैः
महापातकयुक्तश्चेन्न भवेत द्विजोत्तम ५०८
हमापातकिनां मोक्षः प्रायश्चित्तेर्विना कुतः ५०९
श्रवणेन युता सैव यदि पञ्चदशी भवेत्
तस्यां स्नानादिकं सर्वं चाक्षयं परिकीर्त्तितम् ५१०
माघे मासि सिते पक्षे चतुर्थी या भवेद् द्विज
उमासम्पूजनं कार्यं तस्यां सौभाग्यमीप्सुना ५११
दीपान्नमाल्यधूपैश्चाप्यार्द्रकेण गुडेन च
कुसुम्भलवणाभ्यां च कुङ्कमाञ्जनकङ्कतैः ५१२
कुन्दपुष्पैः समानीतैः प्रयत्नादपि काश्यप
पूज्याश्च सुभगास्तत्र योषितस्तु पतिव्रताः ५१३
यासां जीवन्ति नाथाश्च स्वसृप्रभृतयश्च याः
तथैवाश्वयुजे मासि तथा ज्येष्ठे च कारयेत् ५१४
सर्वाश्चतुर्थीः श्रद्धावांश्चतुर्थीत्रितयं ध्रुवम्
कारयेत नरो ब्रह्मन् नारी कुर्याद्विशेषतः ५१५
पौर्णमास्यां तु माघस्य श्राद्धं कृत्वा तिलैर्नरः
काकानां भोजनं दद्यात् प्रभूतं बलिसंयुतम् ५१६
माघ्यां तु समतीतायामष्टम्यां तु दिनत्रयम्
कार्यं स्वल्पमहीमानं विधिं तस्य निबोध मे ५१७
चतुर्विंशतिसंख्यायां त्रेतायां रघुनन्दनः
हरिर्मनुष्यो भविता रामो दशरथात्मजः ५१८
तस्मात्कालात्परं कार्यं महीमानं तथाल्पकम्
तस्मादेवापरं कार्यं महीमानं तथा बृहत् ५१९

अष्टम्यां सर्वसस्यैस्तु चरुः कार्यः प्रयत्नतः
तेनापूपैस्तथा पूज्या द्विजसम्बन्धिबान्धदाः ५२०
रामपत्नी तथा पूज्या सीता देवी प्रयत्नतः ५२१
नवम्यां पिष्टभोज्येन मधुयुक्तेन भोजयेत्
ब्राह्मणाद्यान् यथाशक्ति पूजनीया करीषिणी ५२२
बहुप्रकारसंयुक्तं दशम्यामोदनं ततः
कारयेत्तेन सम्पूज्या द्विजमित्रानुयायिनः ५२३
आत्मपूजा प्रकर्तव्या श्रोतव्यं गीतवादितम्
मङ्गला लभनं कार्यं नित्यमेव दिनत्रयम् ५२४
सैव चेच्छ्रवणोपेता भविता द्वादशी द्विज
सोपवासो हरिं देवं तस्यां सम्पूजयेद् बुधः ५२५
तिलवच्च तथा तस्यां पूर्वोक्तं कर्म कारयेत्
सर्वं तदक्षयं तस्यां कृतं भवति मानद ५२६
तस्यान्तु समतीतायां या स्यात्कृष्णचतुर्दशी
तस्यामुपोषितः स्नातः पूजयेच्च महेश्वरम् ५२७
घृतकम्बलहीनं तु लिङ्गं संस्नापयेद् बुधः
देवोत्थानविधानोक्तैर्द्रव्यैश्च विधिना ततः ५२८
सम्पूज्य गन्धमाल्यादिरक्तवस्त्रानुलेपनैः
नैवेद्यैर्विविधैर्ब्रह्मन् वह्निब्राह्मणतर्पणैः ५२९
भक्त्या रात्रौ ततः कार्यं नृत्तगीतैः प्रजागरम्
श्रोतव्याः शिवधर्माश्च प्रादुर्भावाश्च तत्कृताः ५३०
पैष्टाश्च पशवः कार्या नैवेद्ये शङ्करस्य च
पञ्चदश्यां च सम्पूज्यस्तत्रापि द्विजसत्तम ५३१
कुल्माषलोपिकामिश्रं भोक्तव्यं भोजनं तदा
तस्मिन् मासे ध्रुवं पूज्यो देवः कृष्णचतुर्दशीम् ५३२
इच्छया पूजनीयः स्याच्छेषमासेषु वा न वा
सम्पूज्य रुद्रलोकस्थो गाणपत्यमवाप्नुयात् ५३३

फाल्गुणस्य च मासस्य शुक्लपक्षे द्विजोत्तम
महीमानं यथा कार्यं तथा मे गदतः शृणु  ५३४
अनश्नद्भिरथाष्टम्यां नरैः स्नातैरलङ्कृतैः
प्रदोषसमये देया दीपिकास्तु हिमोपरि  ५३५
देवतानां पितृणां च भोक्तव्यं तदनन्तरम्
द्वितीयेऽहनि मध्याह्ने धान्यदामैः सुशोभनैः  ५३६
पूजनीया गृहा विप्र देवागारा विशेषतः
तदा सीता च सम्पूज्या गन्धमाल्यादिभिस्तथा  ५३७
अनन्तरं च भोक्तव्यं भोजनं च विशेषवत्
उत्सवं चैव कर्तव्यं गीतनृत्तसमाकुलम्  ५३८
नित्यदानं सपक्वान्नमृते तस्मिन् दिने सदा
नान्यत् किञ्चित्प्रदातव्यं लब्धं ग्राह्यं प्रयत्नतः  ४३९
द्वितीयेऽहनि कर्तव्यं प्रतिकर्म तथात्मनः
मङ्गलालभनं कार्यं चोत्सवं च विशेषतः  ५४०
आश्रितानां द्विजानां च शिल्पिसम्बन्धिनां तथा
तस्मिन्नहनि दातव्यं ग्राह्यं चैवाप्युपायनम्  ५४१
मद्यं तु मद्यपैः पेयं ब्राह्मणैः पानकाः शुभाः
शय्यास्थानं च कर्तव्यं धूपगन्धाधिवासितम्  ५४२
तस्मिन्नहनि न कार्यो विमुखः कश्चिदेव तु
स्त्रीभिर्भाव्यं प्रहृष्टाभिः सुवस्त्राभिस्तथैव च  ५४३
स्वाशिताभिः सुगन्धाभिः स्वनुलिप्ताभिरेव तु
भूषणैर्भूषिताभिश्च क्रीडितव्यं नरैः सह  ५४४
फाल्गुण्यास्तु ततो रात्रौ प्राप्ते चन्द्रोदये शुभे
पूजा कार्या शशाङ्कस्य अर्यम्णश्चाप्यनन्तरम्  ५४५
गीतैर्नृत्तैस्तथा वाद्यै रात्र्य् कार्यः प्रजागरः
द्वितीयेऽह्नि ततः प्राप्ते प्रेक्षा देया द्विजोत्तम  ५४६
नर्तकानां नटानां च चारणानां तथैव च

तावदेतद् भवेत् कार्यं यावत्स्यात् कृष्णपञ्चमी ५४७
भोजनं पर्पटप्रायं भोक्तव्यं दिनपञ्चकम्
प्रतिकर्म तथा कार्यं स्त्रीजनस्य तथात्मनः ५४८
तस्यामेव तु पञ्चम्यां कश्मीरा तु रजस्वला
यस्माद् भवति कर्तव्या तस्याः पूजा ततो द्विज ५४९
रम्या शैलमयी कार्या कश्मीरा तां च पूजयेत्
अभ्यङ्गवस्त्रदानेन नैवेद्यं च निवेदयेत् ५५०
पुष्पधूपाद्यलङ्कारं न दातव्यं दिनत्रयम्
नैवेद्ये गोरसं सर्वं वर्जनीयं द्विजोत्तम ५५१
स्त्रीभिस्तु पूजा कर्तव्या मानुषैर्न कथंचन
स्नाप्या स्त्रीभिर्भवेद्देवी कृष्णपक्षाष्टमीं तु तां ५५२
अनन्तरं द्विजैः स्नाप्या सर्वौषधियुतैर्घटैः
ततो गन्धैस्ततो बीजैस्ततो रत्नैस्ततः फलैः ५५३
अनापयित्वा च तां देवीं गन्धैर्माल्यैश्च पूजयेत्
वस्त्रालङ्करणैश्चान्नैर्विशेषैर्गोरसोद्भवैः ५५४
मौद्गैर्माषैस्त्रिकोणैश्च तथा तण्डुलशालिभिः
कर्तव्यं देवयजनं बन्धूनां चैव दापयेत् ५५५
वह्निपूजा च कर्तव्या कर्तव्यं द्विजपूजनम् ५५६
सुस्नाताभिः प्रहृष्टाभिः स्वाशिताभिर्द्विजोत्तम
स्त्रीभिर्भाव्यं सुगन्धाभिः सुवस्त्राभिश्चतद्दिनम् ५५७
भोजनं प्रेषणीयं च तथा मित्रगृहे द्विज
तन्त्रीवाद्यं सुमधुरं श्रोतव्यं स्वाशितै सुखम् ५५८
ततः प्रभृति कश्मीरा ऋतुस्नाता द्विजोत्तम
गर्भं गृह्णात्यतः कार्यं कृष्यारम्भं ततः परम् ५५९
दिने दैवज्ञनिर्दिष्टे क्षेत्रं कृत्वा सुहृद्वृतः
पूजयेत् पृथिवीं देवीं गोयुगं सुरभिं हयम् ५६०
बलदेवं महादेवं वामदेवं दिवाकरम्

ओौषधीशं निशानाथं पर्जन्येन्द्रौ प्रचेतसम् ५६१
रामं सलक्ष्मणं सीतां शेषं च धरणीधरम्
ब्रह्माणं कश्यपं वह्निं वायुं गगनमेव च ५६२
माल्यैर्गन्धैस्तथा धूपै नैवेद्यैश्च पृथक् पृथक् ५६३
वह्निसम्पूजनं कार्यं ततो ब्राह्मणपूजनम्
ब्राह्मणानां ततो देया दक्षिणा वित्तशक्तितः ५६४
ततस्तु वापयेद् बीजं पुरुषो लक्षणान्वितः
स्वाशितश्च सुवस्त्रश्च स्वनुलिप्तः स्वलङ्कृतः ५६५
बीजं सुवर्णतोयाक्तं ससुवर्णं च वापयेत्
पुण्याहे द्विजघोषेण वाद्यशब्देन भूरिणा ५६६
हलेन वाहयेद् भूमिं पूर्वं प्राक् प्रवणां शुभाम्
स्वलङ्कृतेन भोक्तव्यं क्षेत्रमध्ये तदा द्विज ५६७
सुहृद्भार्याश्रितैः सार्धं वाद्यशब्दैर्मनोहरैः
उत्सवं चैव कर्तव्यं गीतनृत्तसमाकुलम् ५६८
फाल्गुण्यां समतीतायां या द्विजैकादशी भवेत्
तस्यां स्त्रीभिर्भवेत् पूज्यश्छन्दोदेव इति स्मृतः ५६९
मनुष्यैस्तु न कर्तव्या तस्य पूजा कदाचन
ब्रह्मणो वरदानेन स्त्रीभिः पूजामवाप्तवान् ५७०
जलोद्भवानां मांसेन भक्ष्यैरुच्चावचैस्तथा
माल्यैर्धूपैश्च विविधैः कुङ्कुमेन सुगन्धिना ५७१
एवं सम्पूजनं कृत्वा द्वादश्यां पूजयेद् बुधः ५७२
द्वारेणादौ विनिष्क्राम्य गवाक्षेण प्रवेशयेत्
स्ववेश्मतो यथाकामं स्थापयेत तदा द्विज ५७३
ततश्चतुर्दशीं प्राप्य तामेव द्विजपुङ्गव
सम्पूज्य शङ्करं कार्यं रात्रौ तु महदुत्सवं ५७४
तस्यां विप्र चतुर्दश्यां निकुम्भः शङ्करं तदा
सम्पूजयति धर्मात्मा सानुयात्रो महाबलः ५७५

तस्यां तदा प्रकर्तव्यं निशि नित्यं प्रजागरम्
पूजा च देवदेवस्य शम्भोः कार्या प्रयत्नतः ५७६
पूजनीयो निकुम्भस्तु पिशाचाधिपतिर्बली
पिशाचानां च दातव्या बलयश्च सुसंस्कृताः ५७७
पललोलोपिकामिश्रा मत्स्यमांसामिषैर्युताः
वृक्षमूलेषु गोष्ठेषु गृहेषु विविधेष्वपि ५७८
चतुष्पथेषु रथ्यासु चत्वरेषु नदीषु च
शून्यालयेषु मुख्येषु गिरीणां शिखरेषु च ५७९
अट्टालकश्मशानेषु राजमार्गेषु काश्यप
तां रात्रिं रक्षणं कार्यं बालकानां गृहे गृहे ५८०
पुंश्चलीसहितैर्नेया क्रीडामार्गैर्निशा च सा
ब्रह्मचर्येण गीतेन नृत्तैर्वाद्यैर्मनोहरैः ५८१
ततः पञ्चदशीं प्राप्य चान्त्यां संवत्सरस्य तु
श्राद्धं कृत्वा प्रदातव्यं शुनामन्नं यथेच्छकम् ५८२
चैत्रशुक्लसमारम्भे प्रथमेऽहनि काश्यप
पितामहस्य कर्तव्या तदा पूजा विचक्षणैः ५८३
पुष्पैर्नानाविधैर्गन्धैर्वस्त्रालङ्कारधूपनैः
हुताशपूजनैर्ब्रह्मन् ब्राह्मणानां च तर्पणैः ५८४
तस्मिन्नेवाह्नि कर्तव्या महाशान्तिर्द्विजोत्तम
आढ्येन रक्षणार्थाय श्रियस्तत्प्रापणाय च ५८५
तस्मिन्नेवाह्नि कर्तव्या पूजा कालस्य काश्यप
तस्मिन् कालस्य गणना प्रवृत्ता पूर्वमेव तु ५८६
तस्मिन्नहनि वै सृष्टं ब्रह्मणेदं जगत्पुरा
सूर्योदये द्विजश्रेष्ठ इत्येवमनुशुश्रुम ५८७
पूजनीयास्तथा देवा ब्रह्मविष्णुमहेश्वराः
ग्रहर्क्षशान्तिः कर्तव्या दैवज्ञविधिचोदिता ५८८
पूजनीया ग्रहाः सर्वे नक्षत्राणि च मानद

कालस्यावयवाः सर्वे ये च संवत्सरादयः ५८९
कालकल्पावुभौ पूज्यौ मनवश्च चतुर्दश
अतीताश्च भविष्याश्च तेषां नामानि मे शृणु ५९०
स्वायम्भुवो मनुः पूर्वं मनुः स्वारोचिषस्तथा
औत्तमस्तामसश्चैव रैवतश्चाक्षुषस्तथा ५९१
वैवस्वतोऽर्कसावर्णि ब्रह्मसावर्ण एव च
भद्रेशदक्षसावर्णौ रौच्यो भौत्यस्तथैव च ५९२
सम्पूजनीया देवेन्द्रास्तथा ब्रह्मचतुर्दश
विश्वभुक् च विपश्चिच्च सुचित्तिश्च निधिस्तथा ५९३
विभुर्मनोजवश्चैव तेजस्वी च तथा वडिः
अद्भुतश्च तथा शान्तिः वृषो देववरस्तथा ५९४
ऋतुधामा च देवेन्द्रः शुचि शुक्रश्चतुर्दश
युगानां च तथा पूजा कर्तव्या द्विजपुङ्गवैः ५९५
पञ्चसंवत्सराः पूज्याः पूज्यं चैवायनद्वयम्
ऋतुषट्कं तथा पूज्यं मासा द्वादश चाप्यथ ५९६
द्वौ पक्षौ तिथयश्चैव पूज्याः पञ्चदशैव तु
करणाश्च मुहूर्ताश्च राशयश्च पृथक् पृथक् ५९७
मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्
भृगुं सनत्कुमारं च सनकं च सनन्दनम् ५९८
धर्मं वरिष्ठं सत्यं च कामार्थौ च हुताशनम्
वसुरुद्रांल्लोकपांल्लोकालोकनिवासिनः ५९९
सुदामानं शंखपादं केतुमन्तं तथैव च
तथा हिरण्यरोमाणं दिक्पालांश्चैव पूजयेत् ६००
शक्राद्यात्र्य ब्राह्मणश्रेष्ठ दक्षपुत्र्यस्तथैव च
सती ख्यातिः स्मृतिः स्वाहा ह्यनसूया तथा स्वधा ६०१
प्रीतिः क्षमा च सम्भूतिः सन्नतिश्चाप्यरुन्धती
कीर्त्तिर्लक्ष्मीर्धृतिर्मेधा तुष्टिः श्रद्धा क्रिया मतिः ६०२

बुद्धिर्लज्जा वसुः शान्तिः पुष्टिः सिद्धिस्तथा रतिः
अरुन्धती वसुधाशी लंबा भानुर्मरुत्वती ६०३
संकल्पा च मुहूर्त्ता च साध्या विश्वा च काश्यप
अदितिर्दितिर्दनुः काला दनायुः सिंहिका मुनिः ६०४
कद्रूः क्रोधा इरा प्रावा विनता सुरभिः खशा
भृशाश्वश्च तथा पूज्यः सुप्रभा च तथा जया ६०५
बहुपुत्रश्च संपूज्यस्तस्य पत्नीद्वयं तथा
पत्नीचतुष्कसंयुक्तं पूज्यं चारिष्टनेमिनम् ६०६
ऋद्धिं वृद्धिं तथा निद्रां धनेशं नडकूबरम्
शंखपद्मौ निधी पूज्यौ भद्रकाली सरस्वती ६०७
वेदोपवेदवेदाङ्गविद्यास्थानानि कृत्स्नशः
नागान् यक्षान् पिशाचांश्च तथैव गरुडारुणौ ६०८
जम्बुः शाकः कुशः क्रौञ्चः शाल्मलिद्वीप एव च
गोमेदः पुष्करश्चैव द्वीपा पूज्याः पृथक् पृथक् ६०९
लवणः क्षीर आज्यश्च दधिमण्डः सुरोदकः
तथैवेक्षुरसोदश्च पूज्यः स्वादूदकस्तथा ६१०
उत्तराः कुरवः पुण्या रम्यो हैरण्वतस्तथा
भद्राश्वः केतुमालश्च वर्षश्चैव इलावृतः ६११
हरिवर्षः किम्पुरुषो वर्षो भारतसंज्ञकः
भारतस्य तथा भेदा पूजनीयाश्च ये नव ६१२
इन्द्रद्युम्नः कशेरुमांस्ताम्रवर्णो गभस्तिमान्
नागद्वीपस्तथा सोम्यो गान्धर्वो वारुणस्तथा ६१३
अयं च मानवद्वीपस्तथा सागरसंवृतः
चत्वारः सागरा पूज्यास्तथा पातालसप्तकम् ६१४
रुक्मभौमः शिलाभौमः पातालो नीलमृत्तिकः
रक्तभौमः पीतभौमः श्वेतः कृष्णक्षितिस्तथा ६१५
कालाग्निरुद्रः शेषश्च वराहश्च तथा हरिः

भूर्भुवःस्वर्महश्चैव जनश्च तपसा सह ६१६
सत्यलोकस्तथालोकाः पूजनीयाः द्विजोत्तम
पृथिव्यापस्तथा तेजः पवनाम्बरमेव च ६१७
मनो बुद्धिस्तथात्मानमव्यक्तं पुरुषं तथा
हिमवान् हेमकूटश्च निषधो नीलपर्वतः ६१८
श्वेतश्चशृङ्गवान्मेरुर्माल्यवान् गन्धमादनः
पर्वतप्रवरः पूज्यो यो नाम्ना मानसोत्तरः ६१९
महेन्द्रो मलयः सह्यः शुक्तिमानृक्षवानपि
विन्ध्यश्च पारियात्रश्च कैलासश्च नगोत्तमः ६२०
भागीरथी पावनी च ह्लादिनी ह्लादिनी तथा
सीता वंक्षुश्च सिन्धुश्च सप्त गङ्गा च मानद ६२१
सुप्रभा काञ्चनाक्षी च विशाला मानसाह्रदा
सरस्वत्योघनादा च सुमेरुविमलोदका ६२२
पुष्कराद्यानि तीर्थानि वितस्ताद्याश्च निम्नगा
शची वनस्पतिर्गौरी धूम्रोर्णा रुचिराकृतिः ६२३
सिनीवाली कुहू राका तथाचानुमतिः शुभा
आयतिर्नियतिः प्रज्ञा मतिर्वेला च धारिणी ६२४
देवौ धाताविधातारौ सप्तछन्दांसि चाप्यथ
ऐरावणश्च सुरभिरुच्चैः श्रवस एव च ६२५
धान्वन्तरिर्ध्रुवश्चैव शस्त्राण्यस्त्राणि चाप्यथ
विनायकः कुमारश्च तथैव च विनायकाः ६२६
शाखो विशाखः स्कन्दश्च नैगमेशस्तथैव च
मरुतश्च ग्रहाश्चैव रोगाणामधिपो ज्वरः ६२७
ऋषयो वालाखिल्याश्च कश्यपागस्त्यनारदाः
तथैवाप्सरसः पुण्याः पूज्या देशाश्च सोमपाः ६२८
आदित्या वसवो रुद्रा विश्वेदेवास्तथाश्विनौ
भृगवोङ्गिरसः साध्या मरुतश्च महाबलाः ६२९

धाता मित्रोऽर्यमा पूषा शक्रोंऽशो वरुणो भगः
त्वष्टा विवस्वान् सविता विष्णुर्द्वादश भानवः ६३०
धरो ध्रुवश्च भोजश्च आपश्चैवानिलानलौ
प्रत्यूषश्च प्रभासश्च वसवोऽष्टौ प्रकीर्त्तिताः ६३१
अङ्गारकस्तथा सूर्यो निर्ऋतिर्घोष एव च
अजैकपाच्चाहिर्बुध्न्यो धूमकेतुर्ध्वजस्तथा ६३२
वाहनश्चेश्वरो मृत्युः कपालिरथकंकणः
एकादशैते विज्ञेया रुद्रास्त्रिभुवनेश्वराः ६३३
क्रतुः दक्षो वसुः सत्यः कालः कामो ध्वनिस्तथा
कुरु वाग्दनुजो विश्वे रोचमानाश्च ये दश ६३४
नासत्यदस्रौ विज्ञेयावश्विनौ वदतां वर
भुवनो भानवश्चैव सुजन्यः सुजनः तथा ६३५
त्याजः सुवश्च मूर्धा च दक्षश्च व्यश्च बन्धुकः
प्रसवश्च व्ययश्चैव भृगवो द्वादश स्मृताः ६३६
आत्मा ह्यायुर्मनोर्दक्षो मदः प्राणस्तथैव च
हविष्मांश्च गविष्ठश्च ऋच्च सत्यस्तथैव च ६३७
इत्येतेऽङ्गिरसः पुत्राः दश देवा महाबलाः
मनो मदश्च प्राणश्च नरो पालश्च वीर्यवान् ६३८
दितिर्हयो नयश्चैव हंसो नारायणस्तथा
विभुश्चापि प्रभुश्चापि साध्या द्वादश कीर्त्तिताः ६३९
एकज्योतिर्द्विज्योतिश्च त्रिज्योतिर्ज्योतिरेव च
एकचक्रो द्विचक्रश्च त्रिचक्रश्च महाबलः ६४०
ऋतजित् सत्यजिच्चैव सुषेणः सेनजित्तथा
अग्निमित्रोऽरिमित्रश्च प्रभुमित्रोऽपराजितः ६४१
ऋतश्च ऋतवान् धर्ता निधर्ता वरुणो ध्रुवः
विधारणो नाम तथा देवदेवो महाबलः ६४२
ईदृक्षश्चाप्यदृक्षश्च ईहादृक् चामिताशनः

कृतिनः प्रसकृद्दत्तः समरश्च महायशाः ६४३
धाता चोग्रे धनुर्भीमस्त्वभियुक्तः सदासहः
द्युतिर्वसुरथो दृश्यो वामः कामजयो विराट् ६४४
एतेचैकोनपञ्चाशन्मरुतः परिकीर्त्तिताः ६४५
विश्वकर्मा ततः पूज्यः सर्वशिल्पप्रवर्त्तकः
आयुधं वाहनं छत्रमासनं चिह्नदुन्दुभी ६४६
सम्पूज्या विधिवद् ब्रह्मन् गन्धमाल्यानुलेपनैः
दीपधूपप्रदानैश्च नैवेद्यैश्च पृथक् पृथक् ६४७
एतेषां पूजनं कृत्वा पूजनीया विशेषतः
ग्रहो नागस्तथा मासो यः स्यात् संवत्सरप्रभुः ६४८
ग्रहो भविष्यद् वर्षश्च तथा मासस्य वारकः
दैवज्ञवक्त्राद् विज्ञेयौ ग्रहमासौ विचक्षणैः ६४९
दैवज्ञादेव विज्ञेयं मासं वर्षं च वारकम्
एतेषां पूजनं कार्यं बह्वन्नकुसुमोत्करैः ६५०
फलवेदात्ततो ज्ञात्वा नागवर्षस्य वारकम्
तस्य पूजा प्रयोक्तव्या भक्ष्यभोज्यपुरःसरा ६५१
ततोग्निहवनं कार्यं सर्वेषामनुपूर्वशः
ओंकारपूर्वकं ब्रह्मन् धृताक्षतयवैस्तिलैः ६५२
तान् पृथक् पृथगुद्दिश्य देया विप्रेषु दक्षिणा
ब्राह्मणा भोजनीयाश्च सुहृत्सम्बन्धिबान्धवाः ६५३
विशेषवच्च भोक्तव्यं कार्यं च महदुत्सवम्
पूजनीया द्विजश्रेष्ठ तथा ज्योतिषका द्विजाः ६५४
धनधान्यौघवस्त्रैश्च पूजनीया द्विजोत्तमाः
फलवेदविदश्चैव त्वितिहासविदश्च ये ६५५
वाचकाः पूजनीयाश्च दक्षिणाभिमुखा द्विज
आत्मशोभा च कर्तव्या पुष्पालंकारधूपनैः ६५६
कथितेयं महाशान्तिः सर्वाघविनिसूदनी

सर्वोत्पातप्रशमनी कलिदुःस्वप्ननाशिनी ६५७
आयुष्प्रदा पुष्टिकरी धनसौभाग्यवर्धिनी
व्याधिशत्रुप्रशमनी राज्यराष्ट्रविवर्धिनी ६५८
मङ्गल्या च पवित्रा च लोकद्वयसुखावहा ६५९
चैत्रमाससमारम्भे ये मयाभिहितास्तव
ते सर्वे ब्रह्मसदनं तदा यान्ति द्विजोत्तम ६६०
ब्राह्मी सभा कामरूपा विशेषेण सदानघ
धारयत्यचलं रूपमनिर्देश्यं मनोहरम् ६६१
तस्यां सभायां ब्रह्माणमनिर्देश्यविसंयुतम्
यथोक्तास्तु नमस्यन्ति ह्युपासन्ति स्तुवन्ति च ६६२
विश्वावसुश्शालिशिनौ गन्धर्वौ च हाहाहूहू
नारदप्रमुखाश्चान्ये गायन्ति च जगद्गुरुम् ६६३
उपनृत्यन्ति देवेशं देवरामा सहस्रशः
उर्वशी मेनका रम्भा मिश्रकेशी ह्यलम्बुसा ६६४
विश्वाची च घृताची च पञ्चचूला तिलोत्तमा
सानुमत्यमला वन्दा प्राधान्येन तथेतराः ६६५
तदा पितामहो देवः सर्वदेवसमागमे
अब्दे नियुङ्क्ते मानुष्ये ग्रहादींस्तत्रपालकान् ६६६
कृत्वोपासांजगद्भर्तुर्यान्ति स्थानान्वतःपरम्
स्वानि स्वानि द्विजश्रेष्ठ हृष्टपुष्टा दिवौकसः ६६७
चैत्रे मासि सिते पक्षे पञ्चम्यां द्विजसत्तम
श्रियश्च पूजनं कार्यं प्रोक्ता श्रीपञ्चमी तु सा ६६८
सर्वथा पञ्चमी पूज्या चैत्रे मासि ध्रुवं तथा
यस्तु सम्पूजयेत्सर्वां पञ्चमीं तु करीषिणीम् ६६९
नासौ विमुच्यते लक्ष्म्या यावज्जीवं द्विजोत्तम
विष्णुलोकमवाप्नोति देहभेदे द्विजोत्तम ६७०
स्कन्दस्य तत्र कर्तव्या पूजा माल्यैः सुगन्धिभिः ६७१

गन्धालंकारवासांसि कुक्कुटं च निवेदयेत्
घराटामजं क्रीडनकं नैवेद्यं च मनोहरम् ६७२
ध्रुवेयं चैत्रषष्ठी च परिशेषास्तु कामतः
यः करोति गृहे तस्य विरोगाः सर्वबालकाः ६७३
तामेव नवमीं प्राप्य सोपवासो नरः शुचिः
सम्पूजयेद् भद्रकालीं पुष्पधूपान्नसम्पदा ६७४
सर्वा या नवमी पूज्या भद्रकाली सुरेश्वरी
कार्यसिद्धिमवाप्नोति तस्यां पूजयिता नरः ६७५
एकादश्यां तु चैत्रस्य शुक्लपक्षे द्विजोत्तम
तस्यां पूजा च कर्तव्या वास्तोर्ब्राह्मणपुङ्गव ६७६
पुष्पालंकारधूपाद्यैश्शाकैश्च विविधैस्तथा
धूपैश्च विविधाकारैर्वह्निपूजाद्विजार्चनैः ६७७
द्वादशी या तु चैत्रस्य शुक्ला नित्यमुपोषितैः
वासुदेवस्य कर्तव्या पूजा द्विज यथाविधि ६७८
चैत्रशुक्लत्रयोदश्यां कामदेवं च पूजयेत्
पट्टस्थं विविधैर्माल्यैर्गन्धरुच्चावचैस्तथा ६७९
आत्मशोभा च कर्तव्या पूजनीया गृहस्त्रियः
इयं ध्रुवा विनिर्दिष्टा शेषा कार्या न वा द्विज ६८०
द्वादश्यां शीततोयस्य कुम्भं पुष्पोपशोभितम्
कामदेवाग्रतः स्थाप्यं पल्लवैश्चोपशोभितम् ६८१
अनर्काभ्युदिते काले स्नाप्या स्यात्तेन वारिणा
दयिता द्विजशार्दूल स्वयं कान्तेन काश्यप ६८२
चैत्रे मासि सिते पक्षे पञ्चदश्यां द्विजोत्तम
योद्धुं याति निकुम्भस्तु पिशाचान् वालुकार्णवे
तस्मात्तेषां तु मध्याह्ने एकैकस्य गृहे गृहे
पूजा कार्या प्रयत्नेन यथावत् तन्निबोध मे ६८४
पिशाचं मृरामयं कृत्वा काद्यं च द्विजसत्तम

गंधैर्माल्यैस्तथा वस्त्रैरलङ्कारैः प्रपूजयेत् ६८५
भक्ष्यैश्च लोपिकापूपैर्मांसैः पानैस्तथैव च
आयुधैर्विविधाकारैः छत्रोपानहयष्टिभिः ६८६
नृभिः शुष्कान्नसम्पूर्णे स्थायिभक्ष्ययुते तथा
कुद्दालपिटके चोभे तथा तस्य निवेदयेत् ६८७
गेयमानद्धवाद्यं च तन्त्रीवाद्यं च वादयेत्
मध्याह्ने तं तु सम्पूज्य प्राप्ते चन्द्रोदये पुनः ६८८
पूर्ववत्पूजयेत् विद्वान् स्ववित्तस्यानुरूपतः
तथा कृतस्वस्त्यनो ब्राह्मणैस्तु विसर्जयेत् ६८९
विसर्ज्यमाने तस्मिंस्तु तन्त्रीवाद्यं च वादयेत्
तस्यानुव्रजनं कार्यं द्वितीयेऽहनि काश्यप ६९०
आरोढव्यं भवेच्छैलं समीपस्थमिति स्थितिः
गृहमागत्य कर्तव्यमुत्सवं गीतवादितैः ६९१
सुहृद्भिः सह भोक्तव्यं भोजनं तु विशेषवत् ६९२
इरा नामाप्सराः पूर्वं शप्ता शक्रेण काश्यप
विश्वावसोः संप्रयुक्ता सुरोपस्थानवर्जिता ६९३
स्थावरत्वमनुप्राप्ता हिमवत्यचलोत्तमे
बहुधा सा विभक्ताङ्गी निकुम्भे निर्गते बहिः ६९४
यदा जाता इरा देवी इरापुष्पोपशोभिता
इरावाटे ततो गत्वा नारीपुत्रगणान्वितः ६९५
सुवासाः स्वनुलिप्ताङ्गः सुचित्तः सुसमाहितः
इरासंपूजनं कुर्यात् पुष्पैरन्नैर्विचक्षणः ६९६
निवेदयेच्च विविधान्भक्ष्यभोज्यान् सदीपकान्
इरावाटे ततो गत्वा भोक्तव्यं च विशेषवत् ६९७
इरापुष्पैस्ततः पूज्या द्विजस्त्रीमित्रबान्धवाः
रक्तसूत्रनिबद्धानि इरापुष्पाणि कारयेत् ६९८
बिभृयादात्मना तानि स्त्रीषु दद्याद् विशेषतः

श्रोतव्यं गीतावाद्यादि द्रष्टव्यं नर्तनं तथा ६९९
इरापुष्पसमायुक्तं पानं पेयं विशेषवत्
इरा देवेषु दातव्या तथा प्रीयन्ति देवताः ७००
इरासहस्रं यो दद्यात् केशवाय समाहितः
तस्य तुष्यति देवेशः स्वर्गं लोकं स गच्छति ७०१
इरया पूजये रुद्रं ब्रह्माणं शशिनं रविम्
शुभां करीषिणीं दुर्गां सर्वास्तुष्यन्ति देवताः ७०२
इरा नागेषु दयिता दयिता मे विशेषतः ७०३
इरावाटे तु यः पूजां करोति मम काश्यप
इरापुष्पैर्भृशं तेन तुष्टिर्मे हि प्रजायते ७०४
शुक्ले वैशाखमासस्य तृतीयायां द्विजोत्तम
तस्यां कार्यं यवैर्होमं यवान्दद्याद् द्विजातये ७०५
यवैः सम्पूजयेद् विष्णुं भोक्तव्याश्च तथा यवाः
गङ्गासम्पूजनं कार्यं तस्मिन्नहनि काश्यप ७०६
जपं होमं तथा श्राद्धं तपः स्नानादिकं चयत्
अक्षयं सर्वमुद्दिष्टं दानं स्वल्पमपि ध्रुवम् ७०७
सिन्धुतीरे प्रयत्नेन द्वितीयायामुपोषितैः
तृतीयायां च कर्तव्यं मनुजैश्च यथाविधि ७०८
विष्णुदेवो जगन्नाथो ब्रह्मन् प्राप्ते कालौ युगे
अष्टाविंशत्तमे भावी बुद्धो नाम जगद्गुरुः ७०८
पुष्ययुक्ते निशानाथे वैशाखे मासि काश्यप
तस्मात् कालादथारभ्य काले भाविन्यतः परम् ७१०
शुक्ले सम्पूजनं तस्य यथा कार्यं तथा शृणु
सर्वौषधैः सर्वरत्नैः सर्वगन्धैस्तथैव च ७११
बुद्धार्चास्नापनं कार्यं शाक्योक्तैर्वचनैस्तथा
सुधासिताश्च कर्तव्या शाक्यावासाः प्रयत्नतः ७१२
क्वचिच्चित्रयुता कार्या चैत्या देवगृहास्तथा

उत्सवं च तथा कार्यं नटनर्तकसङ्कुलम्  ७१३
शाक्यानां पूजनं कार्यं चीवराहारपुस्तकैः
सर्वमेतद् भवेत्कार्यं यावत्प्राप्ता भवेन्मधा  ७१४
दिनत्रयं च कर्तव्यं नैवेद्यं विधिवद् द्विज
पुष्पवस्त्रादि पूजा च दानं दीनजनस्य च  ७१५
पौर्णमासीं तु सम्प्राप्य वैशाखस्य द्विजोत्तम
मधुयुक्तैस्तिलैः कार्यं तदा ब्राह्मणपूजनम्
तिलैः स्नानं तिलैर्होमं तिलैः श्राद्धं तथैव च
मात्रादानं तु कर्तव्यं दीपदानं सुरालये  ७२७
तिला देयाश्च विप्रेषु दक्षिणायां तथा तिला  ७१८
माघकृष्णे द्विजश्रेष्ठ एकादश्यामुपोषितैः
द्वादश्यां सकलः कार्यो वैशाखोक्तो मया विधिः  ७१९
वैशाख्यां पौर्णमास्यान्तु ब्राह्मणान् सप्त पञ्च वा
क्षौद्रयुक्तैस्तिलैः कृष्णैरर्चयेदथवेतरैः  ७२०
प्रीयतां धर्मराजेति यदा मनसि वर्तते
यावज्जीवं कृतं पापं तत्क्षणादेव नश्यति  ७२१
ओषधीनां ततो राजा संपक्वो भवते यवः
यवान्नेन तदाभ्यर्च्या देवताः पितरस्तथा  ७२२
ततोऽनुलिप्तः स्रग्वी च नववासा यथाविधि
वाद्यब्राह्मणघोषेण यवान्नं प्राशयेन्नरः  ७२३
ज्यैष्ट्यां तु समतीतायां या द्विजेन्द्राष्टमी भवेत्
तस्यां विनायकः पूज्यः सगणो मोदकोत्करैः  ७२४
भक्ष्यैर्माल्यैस्तथा गन्धैः कुल्माषेण च भूरिणा
गीतवाद्यैः सुमधुरैः ब्राह्मणानां च तर्पणैः  ७२५
सर्वास वा पूजनीयास्त्वष्टमीषु विनायकः
कार्यसिद्धिमवाप्नोति सोपवासस्तु पूजयेत्  ७२६
आषाढमासे संप्राप्य स्वातियोगं तथा द्विज

वायुसम्पूजनं कार्यं गन्धैर्माल्यैर्द्विजोत्तम ७२७
भूरिणा परमान्नेन सक्तुना विविधेन च
सुमनोभिर्विचित्रैश्च कुसुमैश्च तथापरैः ७२८
आषाढशुक्लपक्षान्ते कर्तव्यं दिनपञ्चकम्
देवप्रस्वापने ब्रह्मन्नुत्सवं गीतवादितैः ७२९
एकादशीचतुर्दश्योर्घनहोत्रं च कारयेत्
निशाद्वयं ततः कार्यं रात्रिजागरणं तथा ७३०
द्वादश्यां पञ्चदश्यां च द्विजसात्वतपूजनम्
त्रयोदश्यां च कर्तव्यं प्रेक्षादानं यथाविधि ७३१
धनं च शक्त्या दातव्यं ये नरा रङ्गजीविनः ७३२
हिंसात्मकैस्तु किं तस्य यज्ञैः कार्यं महात्मना
प्रस्वापे च प्रबोधे च पूजितो येन केशवः ७३३
आषाढान्ते वैश्वदेवं नक्षत्रं प्राप्य पण्डितः
विद्वान् सम्पूजयेद् देवान् वायूक्तविधिना तथा ७३४
सक्तन् गोरससंमिश्रान् ब्राह्मणेभ्यः प्रदापयेत्
हिमं च शर्करां चैव शाकं हरितकं तथा ७३५
छत्रोपानहमाल्यादि दक्षिणायनवासरे
वारिधान्यश्च सम्पूर्णा शीततोयेन मानद ७३६
आषाढ्यां समतीतायां यदा स्याद् द्विज रोहिणी
तदा च कश्यपः पूज्यो देशस्यास्य प्रवर्तकः ७३७
गन्धमाल्यादि नैवेद्यैर्ब्राह्मणानां च पूजया
तस्मिन्नहनि रोहिण्यः पूजनीयाः सवत्सकाः ७३८
ततस्तु श्रावणीं प्राप्य वितस्तासिन्धुसङ्गमे
स्नात्वा संपूजनं कार्यं देवदेवस्य शार्ङ्गिणः ७३९
स्वस्तिवाच्य द्विजान् पश्चात् क्रीडितव्यं यथासुखम्
विशेषवञ्च भोक्तव्यं तत्र वै द्विजपुङ्गव ७४०
सामध्वनिश्च श्रोतव्यस्तस्मिन्नहनि काश्यप

क्रीडितव्यं विशेषेण कुमारीभिस्तथा जले ७४१
श्रवणर्क्षमनुप्राप्ते चन्द्रमस्यथ काश्यप
स्नातस्य श्रवणे पुष्टिः सर्वास्मिन् सर्वदा भवेत् ७४२
श्रावण्यां समतीतायां या स्यात् कृष्णाष्टमी
तस्यामुत्पद्यते देवो मानुष्ये मधुसूदन ७४३
भारावतारणार्थं हि तस्यान्तु द्विजसत्तम
अष्टविंशे तु सम्प्राप्ते द्वापरान्ते च नः श्रुतम् ७४४
तत्राहनि तु कर्तव्यं तस्मात्कालात्तदा परम्
पूजनं देवदेवस्य देव्याश्चैव यथा विधि ७४५
देवकी च यशोदा च तथा पूज्ये द्विजोत्तम
गन्धैर्माल्यैस्तथा भक्ष्यैर्यवगोधूमसम्भवैः ७४६
सगोरसैर्भक्ष्यभोज्यैः फलैश्च विविधैस्तथा
एवं सम्पूजनं कृत्या रात्रौ कुर्यान्महोत्सवम् ७४७
तथा जागरणं कार्यं नवम्यां द्विजसत्तम
अनर्काभ्युदिते काले स्त्रियः कौसुम्भवाससः ७४८
नदीतीरे शुभे रम्ये विविक्ते सरसि त्वथ
नयेयुः प्रतिमाः सर्वा गीतवाद्यैर्मनोहरैः ७४९
तस्मिन्नहनि भोक्तव्यं भोजनं यवसंभवम्
युक्तमिक्षुविकारैश्च मरिचैश्च घृतेन च ७५०
ततः पञ्चदशीं प्राप्य कृष्णां पित्र्यर्क्षसंयुताम्
पितृणां तर्पणं कार्यं श्राद्धं कार्यं प्रयत्नतः ७५१
सुभाषितो बर्हिषदः अग्निष्वात्तास्तथैव च
क्रव्यादश्चोपहूताश्च आज्यपाश्च सुकालिनः ७५२
सर्वे पितृगणा पूज्या पुष्पधूपान्नसम्पदा
तिलैः कार्याः प्रयत्नेन श्राद्धस्तस्मिन् द्विजोत्तम ७५३
प्रोष्ठपदस्य मासस्य शुक्लपक्षे दिने दिने
पूजनीयो महेन्द्रश्च सती देवी तथैव च ७५४

पटे कृत्वा तु सर्वेण यथाशक्त्या द्विजोत्तम
दैवज्ञेनैव विधिना स तु पूज्यो महीक्षिता
ब्राह्मणानां तु कर्तव्या पूजा च गोप्रजीविना
भक्ष्यैरन्नैः फलैर्मूलैरन्नैर्वस्त्रैः सधूपकैः ७५६
महेन्द्रः सगणः पूज्यः सायुधश्च सवाहनाः
इन्द्रपक्षस्य या मध्ये शुक्ला ब्राह्मण पञ्चमी ७५७
तस्यां मे पूजनं कार्यं गन्धधूपान्नसम्पदा
माल्यैर्वस्त्रोपहारैश्च वह्निब्राह्मणतर्पणैः ७५८
प्रेक्षादानैश्च विविधैर्भूमिशोभाभिरेव च
तस्मिन्नेवाह्नि कर्तव्यं स्थाननागस्य चाप्युत ७५९
ततस्त्वनन्तरं पक्षे श्राद्धं कार्यं दिने दिने
चतुर्दशीं वर्जयित्वा श्यामाकैस्तु विशेषतः ७६०
शस्त्रेण निहता ये तु तेभ्यो धर्म्या चतुर्दशी
सर्वं पक्षं भवेच्छ्राद्धमेवमेवाह केशवः ७६१
त्रिभागहीनं पक्षं वा त्रिभागमन्त्यमेव वा
वित्तशक्त्या तु कर्तव्यं त्रयोदश्यां सदैव हि ७३२
परपाकरतिर्यो वै योऽपि चैवाधनो भवेत्
कर्मजीवी भवेद् यो वै तेनापि द्विजपुङ्गव ७६३
यथाकथञ्चिच्छ्राद्धं च कर्तव्यं स्यात् त्रयोदशीम्
अत्र गाथा पितृगीता निबोध गदतो मम ७६४
अपि नः स कुले जायेद् यो नो दद्यात् त्रयोदशीम्
पायसं मधुसंमिश्रं वर्षासु च मघासु च ७६५
श्राद्धपक्षस्य या मध्ये चतुर्थी द्विजसत्तम
दिक्पालपूजनं कार्यं प्रौष्ठपद्यां सदा बुधैः ७६६
आयुधानि च पूज्यानि रात्रौ दुर्गागृहे तदा
स्नात्वा प्रभाते सम्पूज्य सर्वाण्युक्तानि काश्यप ७६७
भुक्त्वा तु शान्तिः कर्तव्या किञ्चिच्छिष्टे दिवाकरे

नीराजनाख्या सा ज्ञेया शालिहोत्रविचक्षणैः ७६८
ज्योतिषां पालकाद्याश्च कल्पेष्वाथर्वणेषु च
अतः परं पूजनीया जना ये रङ्गजीविनः ७६९
कन्यामध्यमनुप्राप्ते सहस्रकिरणे द्विज
रात्र्यन्ते सोपवासेन पूज्योऽगस्त्यो महामुनिः ७७०
पूर्णकुम्भैः सकूष्माण्डैर्यवैर्धान्यैर्घृतेन च
जातीपद्मोत्पलैः शुभ्रैश्चन्दनेन सितेन च ७७१
धेन्वा वृषेण वस्त्रैश्च रत्नैः सागरसम्भवैः
छत्रोपानहदण्डैश्च पादुकाभिस्तथैव च ७७२
भूरिणा परमान्नेन फलमूलैः सुशोभनैः
अन्नप्रकारैर्भक्ष्यैश्च वह्निब्राह्मणभोजनैः ७७३
संवत्सरं तु त्यागेन फलस्यैकस्य काश्यप
अगस्त्यपूजां कृत्वैवं दैवज्ञं पूजयेत् ततः ७७४
तेन संदर्शितं पश्येत्तदागस्त्यं महामुनिम्
कामानभीष्टानाप्नोति दृष्ट्वागस्त्यं मुनिं नरः ७७५
धान्ये पक्वे सिते पक्षे दिने दैवज्ञचोदिते
देवान् पितॄन्समाभ्यर्च्य जलमग्निं द्विजांस्तथा ७७६
द्विजातिपूजनं कृत्वा दैवज्ञस्य च पूजनम्
नववस्त्रपरीधानः स्वनुलिप्तः स्वलङ्कृतः ७७७
स्रग्वी पूर्वमुखः शुक्लो ब्रह्मघोषपुरः सरः ७७८
मध्ये ब्रह्माणमालिख्य तथानन्तं च भोगिनम्
ततो लिख्येत दिक्पालान् स्वां स्वां दिशमवस्थितान् ७७९
तेषां तु पूजनं कार्यं धूपमाल्यानुलेपनैः
वस्त्रैरत्नैः फलैर्भक्ष्यैर्वह्निब्राह्मणतर्पणैः ७८०
गुडोपेतास्तथा धाना सर्वसस्यसमुद्भवाः
ब्राह्मणानां प्रदातव्या भृत्यबन्धुजनस्य च ७८१
स्वयं तु धाना भोक्तव्या रात्रौ न तु दिवा बुधैः

दिवा धानासु वसति रात्रौ च दधिसक्तुषु ७८२
अलक्ष्मीः कोविदारेषु कपित्थेषु सदा स्थिता ७८३
तामेव पञ्चमीं प्राप्य पूज्यो देवो जलेश्वरः
पूजनीया उमा देवी यथा तु धनदस्तथा ७८४
तामेव षष्ठीं सम्प्राप्य स्नापनीयाः कुमारिकाः
अलङ्कतास्तु कर्तव्या प्राप्य तामेव सप्तमीम् ७८५
आत्मपूजा नरैः कार्या स्त्रीणां बालजनस्य च
ततस्तामष्टमीं प्राप्य क्रीडितव्यं यथासुखम् ७८६
सिन्दूरकर्दमाक्ताङ्गैर्नृत्यवाद्यपुरःसरन्
स्नात्वा संपूजनीया तु देवी नाम्ना त्वशोकिका ७८७
शय्यासनं निवेद्यं स्यात् सोत्तरच्छदनं शुभम्
पुष्पान्नधूपनं सर्वं भोक्तव्यं गुडसंयुतम् ७८८
उमायाः पूजनं कार्यं तस्यां सौभाग्यमीप्सुना
धूपान्नदीपमाल्यैश्च दध्यन्नेन गुडेन वा ७८९
कुसुम्भलवणाभ्यां वा कुङ्कुमाञ्जनकङ्कणैः
आराममथगत्वा तु तोयवृक्षोपशोभितम् ७९०
ततस्तोये तु वैतस्ते स्नातव्यं दिनसप्तकम्
दशम्यादौ द्विजश्रेष्ठ यताहारेण साधुना ७९१
वितस्ताजन्मदिवसात् त्र्यहं पूर्वं त्र्यहं परम्
वितस्ताजन्मदिवसं तां च ब्रह्मंस्त्रयोदशीम् ७९२
पूजनीया वितस्ता स्यात्तथा तं दिनसप्तकम्
गन्धैर्माल्यैः सनैवेद्यैर्दीपदानैः सुशोभनैः ७९३
पताकाभिर्विचित्राभी रक्तसूत्रैः सकङ्कणैः
फलैश्च विविधैर्ब्रह्मन् वह्निब्राह्मणतर्पणैः ७९४
वितस्ताजन्मदिवसाद्यदूर्ध्वं स्याद् दिनत्रयम्
प्रेक्षादानं च कर्तव्यं पूजनीया नटादयः ७९५
वितस्तोत्सवमध्ये तु शुक्ला या द्वादशी द्विज

सोपवासो हरिं देवं पूजयेत विचक्षणः ७९६
एषा ध्रुवा विनिर्दिष्टा शेषा कार्या न वा द्विज
महती सा विनिर्दिष्टा द्वादशी सर्वदा शुभा ७९७
द्वादशी बुधयुक्ता सा महत्यपि च कीर्त्तिता
तस्यां जप्यं तथा स्नानं दानं श्राद्धादिकं तथा ७९८
प्रोक्तवान् द्वादशगुणं स्वयं मे मधुसूदनः
बुधश्रवणसंयुक्ता द्वादशी द्विज सा यदि ७९९
अत्यन्तमहती नाम तस्यां सर्वमथाक्षयम्
तस्यां स्नात्वा नरः सम्यङ नदीद्वितयसङ्गमे ८००
फलमाप्नोति यत्प्रोक्तं संनिहत्यां रविग्रहे
उपानहौ तथा छत्रं पूर्णकुम्भं तथैव च ८०१
वस्त्रयुग्मं तथान्नाद्यं यः प्रयच्छति वै तदा
शेषाणां यदि चेत् कर्ता श्वेतद्वीपे महीयते ८०२
सैव चेच्छ्रवणोपेता यदि वा स्याच्च द्वादशी
तस्य स्युरिच्छतो लोका यावदिन्द्राश्चतुर्दश ८०३
तस्मिन्नहनि संप्राप्य वितस्तासिन्धुसङ्गमात्
मृत्तिकां स्नानकाले तु स्नातव्यं सततं तया ८०४
सङ्गमस्नानजं पुण्यं तेनाप्नोति नरः सदा ८०५
अथाश्वयुक् चतुर्थ्यां तु देवपूजा विधीयते
नवम्युक्तविधानेन सर्वोपकरणादिभिः ८०६
पूज्याश्च सुभगास्तत्र याश्च नार्यः पतिव्रताः
यासां जीवन्ति नाथाश्च स्वसृप्रभृतयश्च याः ८०७
यथैवाश्वयुजे मासि तथा माघे च पूजयेत्
यथा माघे तथा ज्येष्ठे चतुर्थीत्रितयं तदा ८०८
आश्वयुज्यां शुक्लपक्षे स्वातिना संगतः शशी
यदा तदोच्चैश्रवसः पूजा कार्या प्रयत्नतः ८०९
पूजनीयाश्च तुरगा यदि स्यान्नवमी द्विज

शान्तिस्वस्त्ययनं कार्यं तदा तेषां दिने दिने ८१०
धान्यं भल्लातकं कुष्ठं वचासिद्धार्थकानि च
पञ्चरङ्गेण स्त्रेण तथा बध्नीत पण्डितः ८११
वायव्यैर्वारुणैः सौरैः शाक्रैर्मन्त्रैश्च वैष्णवैः
वैश्वदेवैस्तथाग्नेयैर्होतव्योऽग्निर्दिने दिने ८१२
तुरगा यन्त्रणीयाश्च पुरुषैः शस्त्रपाणिभिः
ताडनं वाहनं चैव तदा तेषां विवर्जयेत् ८१३
ततः शाक्रमनुप्राप्ते नक्षत्रं च निशाकरे
कुमुदैरावणौ पद्मः पुष्पदन्तोऽथवामनः ८१४
सुप्रतीकोऽञ्जनो नीलः पूजनीया गजोत्तमाः
नमस्कृत्य यथाश्वोक्तं विधिं नागेषु कारयेत् ८१५
ततोऽष्टम्यां पूजनीया भद्रकाली यथाविधि
उपोषितैरर्घधूपैश्च वस्त्रैर्माल्यादिभिस्तथा ८१६
दीपै रत्नैस्तथा भक्ष्यैः फलैर्मूलैस्तथैव च
आमिषैर्विविधैः शाकैर्वह्निब्राह्मणतर्पणैः ८१७
बिल्वपत्रेण च तथा चन्दनेन घृतेन च
पानकैर्विविधाकारैः सस्यैः शिल्पिजनैस्तथा ८१८
भूशोभाभिर्नृत्तगीतैः रात्रिजागरणेन च
दुर्गागृहे पुस्तकानां पूजा कार्या तथा द्विज ८१९
स्वकानां शिल्पभाण्डानां कार्या शिल्पिजनेन च
वाद्यभाण्डानि चान्यानि कवचानि तथैव च ८२०
आयुधानि वरं लब्ध्वा हृष्टो मंगलपूर्वकम्
प्राश्नीयाद् दधिसंयुक्तं ब्राह्मणेनाभिमन्त्रितम् ८२१
आश्रितोपाश्रितान् मित्रान् फलवेदविदस्तथा
पूजनीयाश्च कर्तव्यं स्त्रीभिर्गत्वा फलद्रुमम् ८२२
देवीं सम्पूज्य पुष्पादिदीपधूपान्नसम्पदा
दत्त्वान्नपिण्डं श्येनस्य तेन पिण्डोभिनन्दितः ८२३

सुहृत्सम्बन्धिविप्राणां यथाश्रितजनस्य च
दातव्यं भोजनं विप्र वसन्तेऽथ शरद्यपि ८२४
अष्टम्यां वा चतुर्थ्यां वा चतुर्दश्यां तथैव च
नवम्यामथ दातव्यं शुक्ले पक्षेऽथ नेतरे ८२५
यथा पूजा कृता देव्या तथा भोक्तव्यमग्रतः ८२६
एवमेव प्रदातव्यं गृहदेव्या विचक्षणैः
ब्रह्मन् संवत्सरस्यादौ श्येनपिण्डं विवर्जितम् ८२७
तच्च देयं गृहे विप्र न तु वृक्षे कदाचन ८२८
यदा पक्वं भवेद् द्राक्षावाटं चैव सुशोभनम्
गन्तव्यं स्त्रीसहायेन भृत्यमित्रान्वितेन च ८२९
अनुलिप्तेन स्नातेन स्रग्विणा च सुवाससा
द्राक्षावाटे च सम्पूज्या श्यामा देवी द्विजोत्तम ८३०
पुष्पधूपान्नभक्ष्याद्यैर्ब्राह्मणानां च तर्पणैः
कुल्माषेण प्रभूतेन घृतेन मधुना तथा ८३१
ब्राह्मणानां च दातव्या द्राक्षा प्रथमतो द्विज
ततस्तु पश्चाद् भोक्तव्यं मृद्वीकाबहुसंयुतम् ८३२
कर्तव्यमुत्सवं चानु गीतनृत्तसमाकुलम् ८३३
प्रतिमासं च पुष्येण राज्ञः स्नानं विधीयते
ज्योतिषोक्तविधानेन सर्वकालफलप्रदम् ८३४
जन्मर्क्षं च गते चन्द्रे सर्वेणैवं तथा द्विज
चन्द्रस्य पूजाकर्तव्या नक्षत्रग्रहयोस्तथा ८३५
नक्षत्रदेवता याश्च पुष्पधूपान्नसम्पदा
विप्राग्निपूजनं कार्यमुत्सवं गीतवादितैः ८३६
संवत्सरस्याथ कार्यो लक्षहोमो महीक्षिता
कोटिहोमस्तथा कार्य एक एव द्विजोत्तम ८३७
तयोर्विधानं विज्ञेयं कल्पेष्वाथर्वणेषु च ८३८
नित्यानि तानि कर्माणि निमित्तेष्वपराणि च

सम्मन्त्र्य सह कार्याणि संवत्सरपुरोहितैः ८३९
अभिषेकाह्नि कर्तव्यं प्रतिसंवत्सरं नृपैः
अभिषेकं द्विजश्रेष्ठ यथापूर्वं सदैव तु ८४०
पुरोधाः सोपवासस्तु जुहुयाज्ञातवेदसि
गणं चैव प्रतिरथं शब्दवर्षगणावुभौ ८४१
आयुष्यमभयं चैव तथा स्वस्त्ययनं परम्
वैष्णवानि च मन्त्राणि शाक्राणि विविधानि च ८४२
सावित्रब्राह्मरौद्राणि वारुणानि तथैव च
नगरं च तथा कार्यं पताकाध्वजसंकुलम् ८४३
नीरजस्कं तथा कार्यं राजमार्गं जलैः शुभैः
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलमालिभिः ८४४
गन्तव्यं वारमुख्याभिस्तथा राजनिवेशनम्
पौरमुख्यैस्तथा बाह्यैर्गणमुख्यैस्तथैव च ८४५
शोभनीयं च नगरं मार्गाश्च नटनर्तकैः
राजा स्नातः पुनः स्नाप्यः पञ्चगव्येन धार्मिकः ८४६
मृत्ताम्ररौप्यसौवर्णैः स्नापनीयो घटैस्तथा
तोयस्य पयसो दघ्नः सर्पिषश्च तथायुतैः ८४७
शूद्रविट्क्षत्रविप्राणां गणमुख्यैर्यथादिशम्
पश्चाद् दक्षिणतः प्राक् च उत्तरेण यथाक्रमम् ८४८
स्नानकाले च कर्तव्यं महत्कलकलं तथा
वादित्रशंखपुण्याहं सूतवन्दिजनैः सह ८४९
सामन्तैस्तु तथा भाव्यं छत्रचामरपाणिभिः
राजा स्नातः पुनः स्नाप्यो मृत्तिकाभिर्यथाक्रमम् ८५०
पर्वतोर्ध्वमृदा राज्ञः शिरः संशोधयेत् तदा
शोध्यौ कर्णौ च वल्मीकाच्छक्रस्थानाच्च कन्धरा ८५१
राजवेश्मगृहद्वाराद्धृदयं तस्य शोधयेत्
देवालयमृदा पृष्ठं दक्षिणं तु तथा भुजम् ८५२

गजदन्तोद्धतमृदा वृषशृंगमृदापरम्
वैश्यद्वारात्कटिं चास्य ऊरू कमलिनीमृदा ८५३
पौरैः स्नातैः सुवस्त्रैश्च भाव्यं मङ्गलपाणिभिः
मृद्भिः स्नाप्य ततः स्नाप्यो राजा सर्वौषधैः शुभैः ८५४
सर्वगन्धैः सर्वरत्नैः सर्वबीजैस्ततः परम्
सर्वपुष्पैः सर्वफलैर्दूर्वागोरोचनांकुरैः ८५५
ततो भद्रासनगतं तीर्थतोयैःशुभाम्बरैः
यथाशक्ति समानीतैः पुरस्कृत्य पुरोहितम् ८५६
नृपतिस्त्वभिषेक्तव्यो दैवज्ञवचनान्नरैः
ब्राह्मणैः क्षत्रियैर्वैश्यैः शूद्रमुख्यैस्तथैव च ८५७
मुख्याभिर्वारमुख्याभिर्वर्णिग्भिश्च यथोचितम्
ततः स्नातोऽनुलिप्ताङ्गः कृतदैवतपूजनः ८५८
आबद्धमुकुटः स्रग्वी बद्धपट्टो विभूषितः
मङ्गलालभनं कृत्वा दत्त्वा पूर्णाहुतिं ततः ८५९
पूजयेत धनौघेन दैवज्ञं सपुरोधसम्
यथाशक्ति द्विजांश्चान्यानभयं चैव घोषयेत् ८६०
आघातस्थानगान् सर्वान् विसृजेत् यथा पशून्
मोक्षयेद् बन्धनात्सर्वान् ऋते लोकस्य कण्टकान् ८६१
व्याघ्रचर्मोत्तरे रम्ये तदा सिंहासने शुभे
उपवेश्यो भवेद् राजा स्वयं गृहपुरोधसा ८६२
पश्येरन् प्रकृतीः सर्वाः स्वयं मङ्गलपाणयः
छत्रायुधाद्यं सम्पूज्य गजसङ्घांस्तुरङ्गमान् ८६३
आरुह्यालङ्कृतं नागं विसृजेद्धनसञ्चयान्
प्रक्रम्य नगरं सर्वं प्रविश्य च तथा गृहम् ८६४
सामन्तपौरमुख्यांश्च धनेनार्च्य विसर्जयेत् ८६५
नित्यं राज्ञा समुत्थाय पूजनीयाः सुरद्विजाः
वह्निसम्पूजनं कार्यं द्रष्टव्यं वदनं घृते ८६६

श्रोतव्यं तिथिनक्षत्रं कर्तव्यं वैद्यभाषितम्
सभासंस्थेन द्रष्टव्यो व्यवहारस्तथा समः ८६७
विमानना न कर्तव्या कस्यचिच्च कदाचन
स्वभेदो रक्षितव्यश्च नित्यं ब्राह्मणपुङ्गव ८६८
दुर्गत्वादस्य देशस्य परचक्रभयं विना
स्वभेदेनेह नश्यन्ति बद्धमूला नराधिपाः ८६९
नित्यं सन्निहिता देवाः कश्मीरामण्डले द्विज
तेषां भक्तिः सदा कार्या नागेषु ब्राह्मणेषु च ८७०
पूज्याः पिशाचाश्च तथा बलिपूर्वेण कर्मणा
देशानुकाराः कर्तव्या जनाः कार्याः स्वधिष्ठिताः ८७१
आगतश्च जनः सर्वः पूजनीयो दिगन्तरात्
दण्डोऽपराधप्रतिमः कार्यः सर्वस्य काश्यप ८७२
नोग्रदण्डो भवेद् राजा क्षमेत न च कस्यचित्
कारयेत तथा राज्यं राजशास्त्रोपदेशतः ८७३
निकुम्भे निर्गते ब्रह्मन् तथा चैवाप्यनागते
षण्मासमध्ये कर्तव्या यात्रा देवगृहे नृपैः ८७४
संवत्सरे सकृत् कार्यं देवतानां गृहे गृहे
यात्रोत्सवं यथा ब्रह्मंस्तथा मे गदतः शृणु ८७५
विनायकगृहे यात्रा चतुर्थ्यां संप्रशस्यते
कुमारस्य गृहे षष्ठ्यां सप्तम्यां सवितुस्तथा ८७६
दुर्गागृहे नवम्यां च पञ्चम्यां श्रीगृहे तथा
अष्टम्यां वा चतुर्दश्यां महादेवनिवेशने ८७७
शक्रवेश्मनि चाष्टम्यां पौर्णमास्यां कलाभृतः
धनदस्य चतुर्थ्यां तु पञ्चम्यां वरुणस्य तु ८७८
पञ्चमी द्वादशी चैव पौर्णमासी तथैव च
सर्वेषामेव नागानां यात्राकर्मणि पूजितः ८७९
शुक्लपञ्चदशी शस्ता सर्वदेवेषु काश्यप

सर्वासु कार्यं तिथिषु तथातिथिनिवेशने ८८०
यात्रां तु कर्तुकामेन पूर्वमेव दिने शुभे
विनायकपतेः पूजा कर्तव्या मोदकोत्करैः ८८१
द्वितीयेऽहनि कर्तव्या ग्रहशान्तिस्ततः परम्
तृतीयेऽहनि कर्तव्यं गन्धर्वाणां च पूजनम् ८८२
चतुर्थेऽहनि कर्तव्यं पिशाचानां च पूजनम्
पञ्चमेऽहनि कर्तव्यं स्थाननागस्य पूजनम् ८८३
षष्ठेऽहनि च कर्तव्यं ब्राह्मणानां च पूजनम्
सप्तमेऽहनि कर्तव्यं दीनानाथस्य पूजनम् ८८४
एवं तु यजनं कृत्वा यथावद्दिनसप्तकम्
ततस्तु स्नापनं कार्यं विधिना येन तच्छृणु ८८५
सुधावदातं कर्तव्यं चित्रितं देवतागृहम्
एवं तु यजनं कृत्वा कुसुमोत्त्करभूषितम् ८८६
ततोऽर्चास्नापनं कार्यं कल्पशाखाविधानतः
पुण्याहगीतघोषेण सुभगानर्त्तितेन च ८८७
ततोऽर्चास्तापनस्यार्थं पौरैर्नृत्तपुरःसरैः
आनीतव्यं च महता विभवेनोदकं शुभम् ८८८
तीर्थात् संनिहिताद्राजन् गजपृष्ठाधिरोहितम्
अश्वयानेऽथगोयाने नरयाने तथा पुनः ८८९
प्रतिमां तेन सम्प्राप्य स्नापयेत यथाविधि
राजाभिषेककथितं कार्यं च नगरे विधिम् ८९०
प्राप्तेऽथ यात्रादिवसे कूटागारं तु कारयेत्
वस्त्रैर्माल्यैस्तथा गन्धैः पताकाभिरलंकृतम् ८९१
आरोप्य प्रतिमां तत्र तत्सरूपां तथापराम्
कूटागारश्च वोढव्यस्तुरगैर्गोभिरेव वा ८९२
बलिभिः पुरुषैर्वापि माल्यवस्त्राद्यलंकृतैः
नृपेण सोऽनुगन्तव्यः सबलेनाथ पृष्ठतः ८९३

प्रधानेनाथ गन्तव्यं नृपहीने तथा पुरे
धूपपूजा प्रदातव्या स्थाने स्थाने तथापरैः ८९४
क्ष्वेडितोत्कृष्टशब्दैश्च जयवाद्यस्वनैस्तथा
पथा समेन नगरं भ्राम्येत कूटगृहं शुभम् ८९५
ततः प्रवेश्य प्रतिमां देववेश्मनि काश्यप
महान्तमुत्सवं कार्यं गीतनृत्तसमाकुलम् ८९६
द्वितीयेऽहनि दातव्या प्रेक्षा रङ्गोपजीविनाम्
तेषां शक्त्या धनं देयं मल्लादीनां द्विजोत्तम ८९७
प्रेक्षाकाले च कर्तव्यं प्रेक्षकाणां च पूजनम्
मनुष्याणां द्विजश्रेष्ठ ताम्बूलकुसुमादिभिः ८९८
ओदनं विकिरेद् भक्त्या सपुष्पफलसंयुतम्
भूतानां खन्यदृश्यानां प्रेक्षकाणां द्विजोत्तम ८९९
बृहदश्वः
इत्युक्तवान् स नागेन्द्रो ब्राह्मणं तं यशस्विनम्
एतत् प्रयत्नं कर्तव्यमारोग्यायुर्धनेप्सुभिः ९००
वित्तशक्त्या करिष्यन्ति ये जना नीलभाषितम्
तेषामारोग्यमायुश्च धनं च भविता बहु ९०१
देहभेदे गमिष्यन्ति देवलोकं न संशयः
पुत्रपुत्रास्तथैतेषां स्वर्गायुर्धनभागिनः ९०२
भविष्यन्त्यायुषोपेता नात्र कार्या विचारणा
तवापि विदितं राजन् सकलं नीलभाषितम् ९०३
लोके देशेऽधिकमतः श्रुत्वा कुरु यथासुखम्
कालदोषसमुद्भिन्नं यत् किञ्चिन्नीलभाषितम् ९०४
तत् सर्वं कुरु राजेन्द्र मम वाक्येन मानद
नीलवाक्यं न क्रियते भवतीहोदकप्लवः ९०५
अतिवृष्टिरनावृष्टिर्दुर्भिक्षं मरणं तथा
अकाले राजमरणं राजदण्डश्च दारुणः ९०६

हिमस्यैव प्रपतनं भूरि चैव प्रजायते
तस्माच्छ्राव्यं तु लोकानां बहुशो नीलभाषितम्  ९०७
तत्कर्तारो भविष्यन्ति पशुधान्यधनैर्युताः
त्वं चापि विजयी शश्वत् सर्वत्रैव भविष्यसि  ९०८
वैशम्पायन उवाच
एवमुक्तोऽपि गोनन्दो बृहदश्वेन भूमिपः
प्रावर्तयत् समुच्छिन्नानाचारान् कालदोषतः  ९०९
तस्मात् स बलभद्रेण मथुरायां निपातितः
नीलोक्तं वचनं राजा काश्मीरः सकलं यदि  ९१०
करोत्यकाले मरणं नैव तस्योपजायते
तस्मिन् देशे तथातङ्को नैव कश्चिद् भविष्यति  ९११
जनमेजयः
काश्मीरकस्तु गोनन्दो बृहदश्वेन भाषितम्
श्रुत्वा स्वकीयमाचारं किमपृच्छदतः परम्  ९१२
वैशम्पायनः
काश्मीरकस्तु गोनन्दो बृहदश्वेन भाषितम्
श्रुत्वोवाच मुनिश्रेष्ठं बृहदश्वं नराधिपः  ९१३
गोनन्द उवाच
प्राधान्येन तु ये नागाः कश्मीरायां कृतालयाः
नामतस्तु समाचक्ष्व श्रोतुमिच्छामि तानहम्  ९१४
बृहदश्वः
नागानामाधिपो नीलो वासुकिश्चोपतक्षकः
कम्बलाश्वतरौ नागौ कार्कोटकधनञ्जयौ  ९१५
ऐलपत्रो ह्यनन्तश्च नागौ नन्दोपनन्दकौ
कुलिकः श्वेतशङ्खश्च पालासः खेडिमो बडिः  ९१६
हेलिहालः शङ्खपालो नागौ चन्दननन्दनौ
नागौ नीलमहानीलौ नागौ वातिकषण्डिकौ  ९१७

द्वौ पद्मौ द्वौ महापद्मौ द्वौ कालौ द्वौ च कच्छपौ
द्वौ समुद्रौ समुद्राणौ द्वौ गजौ द्वौ च तक्षकौ ९१८
हस्तिकर्णौ ह्युभौ नागौ द्वौ हस्ती वामनावुभौ
महिषौ द्वौ वराहौ द्वौ कूपनौ द्वौच पन्नगौ ९१९
पानीयश्चाप्यनीकश्च कनकाक्षः कलिङ्ककः
अर्जुनः पुण्डरीकश्च धनदो नडकूबरः ८२०
खेदः शपालः खेरीशो लाहुरो लेदिरस्तथा
खेडश्च फरथाडश्च जयन्तस्त्वौसमस्तथा
सूदनौ द्वौ सुपार्श्वश्च सुनासः पञ्चहस्तकः
प्रद्युम्नश्चान्धकः शम्भुः साल्वो मूलेश्वरो घशः ९२२
उगोलसाहुनीमध्यौ नागौ गन्धिलपिच्छलौ
स्वधादो मूषकादश्च पिशितादो घटोदनः ९२३
नारायणोऽनिरुद्धश्च वासुदेवो जलन्धमः
पात्रश्च मानसश्चैव तथैवोत्तरमानसः
अमानसः कपाली च नागः संकर्षणस्तथा
शतचारः खिलेचारो रोहिण्याख्योऽथशक्तिकः ९२५
आखुफालो फलाफश्च नागः कानसरस्तथा
सुस्रवो देवपालश्च नागेन्द्रोऽथ बलाहकः ९२६
चन्द्रसूर्यावुभौ नागौ शुचिशुक्लौ विडूरथः
फेलडः सुकुमारश्च खिडीवो विजयो जयः ९२७
ऊडूचः क्रोफणो वायुःशुक्रो वैश्रवणोपमः
मण्डूकनासो गान्धारो नागः शूर्पारकिर्ध्वनिः ९२८
शमनो लोलभो भद्रो बिन्दुर्बिन्दुसरो नडः
तित्तिरिः प्रस्तभद्रश्च नागो ग्रहपतिस्ततः ९२९
अपराजितः पण्डितः कोपतिर्दुर्जयोष्टकः
नागो हिमसरश्चैव नागः फलसरः परः ९३०
तथा नागो ह्यग्रसरः नागो नीलसरो विहा

आशुलाक्षोऽक्षिपालश्च प्रह्लादो यमकस्तथा ९३१
अनिष्टः सुमुखो वेदः खड्गपुच्छो विभीषणः
मौहूर्त्तिकः प्रियस्वामी कुमारश्चन्दनोपमः ९३२
कपालश्चरणषण्डो नागः पूरणकस्तथा
कदम्बश्चापदो वाली विभूतिः कालकुञ्जरः ९३३
डवश्चक्रधरः श्वभ्रो भवो देहारको गुडः
अन्धः पङ्गुस्तथा कुष्ठी काणो बधिरवण्ठकौ ९३४
अनागपादः कितवः सूकरः प्रसवोत्करौ
साधीयः शतपादश्च योगः शतमुखो द्रुहः ९३५
अतिनिद्रोऽतिबहुभुग् बिन्दुनादः शिरोजडः
कामराक्षो विशालाक्षः सुवर्त्ताक्षो भयानकः ९३६
भूवीरो धर्मलावण्यौ दैत्यराजः षडङ्गुलः
गन्धर्वो धृतराष्ट्रश्च कुसुमः कुहरः कुहः ९३७
महाक्षश्च वधूसश्च कदूसो देवदानवौ
नक्षत्रो मषकःपीतो गौतमः सुशुभो जिहा ९३८
स्वर्गः शिखरवासी च श्रीवासः श्रीधरः खगः
लाङ्गली बलभद्रश्च स्वरूपः पञ्चहस्तकः ९३९
कामरूपो दरीकर्णः सप्तशीर्षो बलहरः
सुनेत्रो बहुनेत्रश्च हनुमान् अङ्गदो हरः ९४०
हबकः पाठरः पाथो मलो विमलको मटः
नागः शतमुखश्चैव चित्राश्वो दधिवाहनः ९४१
सुशीमः कालियः कालः पटनः खदिरस्तथा
अत्रिश्च शवलश्चैव वर्णको ललनस्तथा ९४२
हेलियारो हेमियारो वलीरः केलुको निमिः
चाटरो लेलिहानश्च पञ्चास्यः पिङ्गलोदरः ९४३
कृतं त्रेता द्वापरश्च समः संवत्सरस्तथा
खल्वाटो बहुरोमा च कापोतिः पुष्पसाह्वयिः ९४४

राष्ट्रेश्वरः शिनीरिश्च शतानन्दोऽतिकोपनः
आनन्दोऽथ जयानन्दः त्रिशीर्षो जटिलस्तथा ९४५
गन्धः सोमस्तथा गार्ग्य इनिटिस्सनिटिस्तथा
ऐरावतः सकौरव्यो माषादः कुमुदप्रभः ९४६
हवोत्सवः शठः शाण्यः शत्रुघ्नो रामलक्ष्मणौ
महादेवः कामपालो गोशिराः सयुधिष्ठिरः ९४७
डाङ्गः भूयो विशाखश्च सोमो रेवा महोदरः
मकरो मकराक्षश्च नड्बलो बलवान् शिखी ९४८
चन्दपाटनकः काकः केबुको ब्राह्मणप्रियः
करवीरो जरासन्धो निशाचरदिवाचरौ ९४९
पातञ्जलिश्च वत्सश्च माठरो विठरो विडः
होचरः करवालश्च तपनोघः शिरस्तथा ९५०
कर्करः करवाटश्च वरघोषः सुमङ्गलः
गुल्लकः शम्बरः शामी पयो माहानिहाशजः ९५१
करहालः कुसूरात्रो धौम्यो नागोऽथ गालवः
उखोलश्च शिकोलश्च वह्निरूपो हिरण्ययः ९५२
सत्याकुलः कुलूषश्च कृपाणः कूटको हरिः
किमूदः शलभश्चैव किंशुकः प्रियसारकः ९५३
माराकुलोऽभ्रशिखरो वसिष्ठः सवनामुखः
नागौ राजमहाराजौ सुभद्रभद्रवालिशौ ९५४
वीरब्रह्माशनौ नागौ नागौ सारसपुक्ककौ
डक्ककश्च तथा चक्को गोशो वंशनगस्तथा ९५५
विद्याधरश्च यक्षश्च विरसः सस्यवर्धनः
भद्राश्वो गजनेत्रश्च कणारः कुमुदस्तथा ९५६
आनकः कनवः चम्बः शण्डमर्कौ गिरिप्रियः
उग्रायुधोऽभिमन्युश्च अमरश्चामृताशनः ९५७
अजकर्णोऽथगोनासः सगालज्वालकाननः

ब्राह्मणः क्षत्रियो वैश्यः शूद्रो दीप्तो विहंगमः ८५८
शंखाक्षः कमलाक्षश्च मणिनागो बहेचकः
जयन्तः कोपनो विश्वः शाखामुखसुवर्चलौ ९५९
गुहा सुमाली माली च माल्यवानानृतः परः
क्षात्रो मत्स्यानको भीष्मः काश्मीरो मधुवालिशौ ९६०
भीमाक्षो भीमनादश्च नागौ हालुषकालुषौ
महेन्द्रेन्द्रसुधामानः शालीयो मालियस्तथा ९६१
सहस्रधारो द्युतिमान् विभूतिकवडास्वरौ
शवलो बहुरूपश्च भद्राश्वश्चोत्तरीयशः ९६२
मणिकण्ठः कलोलश्च शूरवालोऽथ नूपुरः
कुशकुण्डोऽतुल्यषश्च अटः श्वभ्रो वितारणः ९६३
अरविन्दः सकल्हारो बिन्दुमान् द्रमिटो वटः
सागरौ द्वौ तथा गाङ्गौ वैतस्तो यामुनावुभौ ९६४
चित्रोपचित्रः सुरभिर्भूतलाम्बरचारिणौ
उपचित्रः कङ्कतश्च नागौ नारदपर्वतौ ९६५
विश्वावसुः पारिजातो गल्लुलुल्लो जलालुसः
नागश्च माक्षिकस्वामी भूर्जिलश्चिकुरस्तथा ९६६
अकद्रो बहुकेशश्च केशपिङ्गलधूसरौ
लम्बकर्णो गण्डलश्च नागः श्रीमाढकस्तथा ९६७
आवर्ताक्षश्चन्द्रसारो नागः कर्हसुरस्तथा
लम्बकोऽथ चतुर्वेदः पुष्करत्रितयं तथा ९६८
अक्षोटनागष्टङ्कश्च श्येनो वट्टिलकाचरौ
क्षीरकुम्भो निकुम्भश्च विकुम्भः समरप्रियः ९६९
एलिघानो विघानश्च चाण्डो भोगी ज्वरान्वितः
भोगो भार्गवतो रौद्रो रुद्रो भोजकदेहिलौ ९७०
रोहिणोऽथ भरद्वाजो दधिनक्रः प्रतर्दनः
नागौ जानुवरेवौ द्वौ शत्रुमित्रौ सकर्दमौ ९७१

पङ्कश्च किन्दमो रम्भो बहुभोगो बहूदरः
मत्स्यो भीतो बहूत्साहो करडिः विनताप्रियः ९७२
ताम्राकरोऽथरजतो वनमाली सभावकः
नागो ज्योतिष्यको वेद्यो धौरसारो जनार्दनः ९७३
न्यग्रोधो डम्बरोऽश्वत्थो बलिपुष्पो बलिप्रियः
अङ्गारकः शनैश्चारी नागः कुञ्जरको बुधः ९७४
कलिगृत्सौ कुटिलको नागौ राहुबृहस्पती
चौरकस्तस्करः केतुः सूतपौरोगवावुभौ ९७५
अजकर्णोऽश्वकर्णश्च विद्युन्माली दरीमुखः
ओराणो रोचनो हासी नर्तनो गायनस्तथा ९७६
कम्भाटश्च सुभाटश्च बहुपुत्रो निशाचरः
मयूरः कोकिलस्त्राता मलयो यवनप्रियः ९७७
कोटपालो महीपालः गोपालः पटलशुचिः
राजाधिराजो विनतः स्वर्गो विमलको मणिः ९७८
चक्रहस्तो गदाहस्तः शूली पाशी सगस्तथा
नागश्चित्रकरो वत्सो वत्सो बकपतिस्तथा ९७९
शीतातो यवमाली च रावणो राक्षसाकृतिः
यज्वा दाता तथा होता भोक्ता भोगपतिस्तथा ९८०
एते प्रधानतो राजन् नागेशाः कीर्त्तिता मया
एतेषां यत् परीवारं पुत्रपौत्रादिकं च यत् ९८१
न तच्छक्यं मया राजन् वक्तुं वर्षशतैरपि
सर्वेषामेव नागानां पुण्यानि भवनान्युत ९८२
सर्वे वरप्रदा नागा सर्वे नीलमनुव्रताः
सर्वेऽतिदयिता राजन् वासुकेः सुमहात्मनः ९८३
दिवपालानथ ते वक्ष्ये कश्मीरायां निबोध तान्
पूर्वस्यां दिशि राजेन्द्र नागो बिन्दुसरः स्मृतः ९८४
दक्षिणेन तथा नागो नाम्ना श्रीमाढकः स्मृतः

उत्तरेण तथा राजन् प्रोक्तश्चोत्तरमानसः ६८५
एवं नागसहस्राणि प्रयुतान्यर्बुधानि च
तार्क्ष्यजं तु भयं त्यक्त्वा वसन्तीह गतव्यथाः ६८६
ये चोक्ताश्च मया नागास्तेषां मध्याच्छडङ्गुलः
एको विवासितो राज्ञा नीलेनामिततेजसा ६८७
स्थानं षाडङ्गुलं राजन् महापद्मस्य धीमतः
तृतीयस्य तु यद्वृत्तं तत्र जातं जलाशयम् ६८८
योजनायामविस्तारं समुद्रमिव चापरम् ६८९
छद्मनापहृतं यच्च महापद्मेन पार्थिव
नीलस्यानुमतं पूर्वं विश्वगश्वान्नराधिपात् ६९०
गोनन्दः
षडङ्गुलः कथं राज्ञा नीलेनास्माद् विवासितः
कथं च विश्वगश्वस्य स्थानं जातं जलाशयम् ६९१
एतत्सर्वं समाचक्ष्व कुशलो ह्यसि धार्मिक ६९२
बृहदश्वः
पूर्वमेव सतीदेशे महापद्मं भुजङ्गम
विदित्वैव कृतस्थानं वैनतेयो ह्यबाधत ६९३
तस्य पुत्रांस्तथा सर्वानाश्रितोपाश्रितान् खगः
आकृष्य भक्षयामास शतशोऽथ सहस्रशः ६९४
स्वजने भक्ष्यमाणे च महापद्मो भुजङ्गमः
आजगाम महानागं नीलं शरणमञ्जसा ६९५
स्थानं च प्रार्थयामास कश्मीरायां जनेश्वर
तमुवाच तदा नीलो महापद्मं भुजङ्गमम् ६९६
नागा भुजगशार्दूल सर्वे ते च कृतालयाः
नास्ति स्थानं तु वससि यत्र नागेन्द्रसत्तम ६९७
न तं देशं प्रपश्यामि सूक्ष्ममप्यमरप्रभो
नागैर्नाधिष्ठितं यत्तु सर्वमेव भुजङ्गम ६९८

परिवारेण बहुना तथा त्वं परिवारितः
किन्त्वस्ति साम्प्रतं शून्यं स्थानं षाडङ्गुलं शुभम्  ९९९
मया निर्वासितो नागस्तस्माद्देशात् षडङ्गुलः
मानुषाणां स दाराणि हरत्यहरहः पुरा  १०००
इतो निर्वास्य दत्तं च स्थानं तस्य ततो मया
उशीरके गिरिश्रेष्ठे दार्वेषु भुजगोत्तम  १००१
मयापि स्थानपालोऽसौ युक्त्या तत्र निवेशितः
गृहीतश्चानुरागेण जनः काश्मीरको मया  १००२
षडङ्गुलश्च नागेन्द्रः समे पथि निवेशितः
पूज्यमानो जनैस्तत्र सुखमास्ते षडङ्गुलः  १००३
मद्वाक्याच्चाभयं दत्तं तत्रास्य हरिणा स्वयम्
स्थाने षाडङ्गुले रम्ये विश्वगश्वस्य भूपतेः  १००४
यदेतन्नगरं रम्यं नाम्ना चन्द्रपुरं पुरम्
अत्र ते द्दमि वसतिं कुरु तत्र जलाशयम्  १००५
स्थाने षाडङ्गुले रम्ये दुर्वासा मुनिसत्तमः
उन्मत्तवेशः प्रच्छन्नो नाप्तवान् संप्रतिश्रयम्  १००६
शप्तं तेन सरोषेण भवितेदं जलाशयम्
न चापि विदितं नाग मुनिवाक्यं तु कस्यचित्  १००७
मयैव केवलं ज्ञातं तस्यैवानुग्रहान् मुनेः
तस्मात्त्वं वसतिं तत्र कुरु पन्नग मा चिरम्  १००८
किन्तु प्रार्थय भूपालं विश्वगश्वं नराधिपम्
छद्मना याचनं तस्य त्वया कार्यं महीपतेः  १००९
स छद्मना याच्यमानो लोभाद्यो न प्रदास्यति
अवश्यकरणीयेऽर्थे पार्थिवः स्याद् विमानितः  १०१०
एवमुक्तस्तु नीलेन महापद्मो भुजंगमः
भूत्वा तु ब्राह्मणो वृद्धो ययौ चन्द्रपुरं पुरम्  १०११
बृहदश्वः

स ददर्श महीनाथं विश्वगश्वं दयापरम्
दृष्ट्वा चायाचत तदा यथा विष्णुर्बलिं तथा १०१२
ब्राह्मणः
राजंश्चन्द्रपुरे शुभ्रे दीयतां मे प्रतिश्रयः
पर्याप्तं यत् कुटुम्बस्य महतो मे दयापर १०१३
विश्वगश्वः
ददानि तेऽहं विप्रेन्द्र स्थानं चन्द्रपुरे शुभम्
गृहाण यावत् पर्याप्तं सकुटुम्बस्य ते द्विज १०१४
बृहदश्वः
प्रतिग्रहजलं गृह्य स्वस्तिवाच्य भुजंगमः
उवाच मन्त्रिणां मध्ये नागरूपी नराधिपम् १०१५
हस्त्यश्वरथसंयुक्तः स्वजनैः परिवारितः
निर्याहि नगरादस्मात् सधनद्रव्यसंचयः १०१६
सकुटुम्बस्य पर्याप्तं नगरं मे जनाधिप
जलाशयः सुविस्तीर्णो भविता शीघ्रमेव तु १०१७
ततः स राजा धर्मात्मा सपौरहयकुञ्जरः
सार्थमन्त्रिचयो गत्वा स्वपुराद् योजनद्वयम् १०१८
पश्चिमेन तदा चक्रे नगरं सुमनोहरम्
विश्वगश्वपुरं नाम तदेतद् भुवि विश्रुतम् १०१९
तत्रोवास सुखी राजा ब्राह्मणान् परिपूजयन्
नगरं प्लावयामास महापद्मो भुजङ्गमः १०२०
तत्रास्ते सपरीवारः सुखी भुजगसत्तमः
महापद्मसरस्तच्च योजनायामविस्तृतम् १०२१
सपुण्यं रमणीयं च सतां हृदयनन्दनम्
महापद्मप्रभावेण दुष्टग्राहविवर्जितम् १०२२
तत्रास्ते स सुखी नागः कुटुम्बपरिवारितः १०२३
महापद्मसरस्यैष कथितः सम्भवो मया

किमन्यत् तव राजेन्द्र कथयामि वदस्व तत्  १०२४
गोनन्दः
भगवंश्छ्रोतुमिच्छामि पुरायान्यायतनान्यहम्
कश्मीरेषु च देशेषु दर्शनं संप्रकीर्त्तय  १०२५
बृहदश्वः
विनायकं तु गाङ्गेयं निसृतं वर्धनद्रुमात्
तं दृष्ट्वा सर्वकल्याणीं सिद्धिमाप्नोति मानवः  १०२६
तथाविधं काम्यवरं तस्य दक्षिणपश्चिमे
देशे तु क्रोशमात्रेण दृष्ट्वा कार्याणि साधयेत्  १०२७
भूर्जस्वामी हिडिम्बेशो लोवारः श्रीविनायकः
उतङ्केशो गुहावासी भीमेशः सौमुखस्तथा  १०२८
भद्रेश्वरो महास्यश्च महाशनगवेषणौ
पौलस्त्यो गिरिवासी च जयेश्वरमहेश्वरौ  १०२९
एकैकमेभ्यो दृष्ट्वा तु गणेशं सुसमाहितः
कार्यसिद्धिमवाप्नोति पुरायं फलमुपाश्नुते  १०३०
शच्याः समीपे पौलस्त्यं दृष्ट्वा स्कन्दं नराधिप
पात्रकुराडे नरः स्नात्वा कौमारं लोकमाप्नुयात्  १०३१
मालीवनं गौतमेशं विश्वामित्रेश्वरं तथा
सौनासिकं वसिष्ठेशं माखरेशं सुरेश्वरम्  १०३२
स्कन्देश्वरं विशाखेशं पौलस्त्यमपरं तथा
दृष्ट्वा कुमारमेकैकं फलं गोदानजं भवेत्  १०३३
पुलस्त्यनिर्मितं शक्रं भरद्वाजकृतं तथा
काश्यपं कारावमागस्त्यं वासिष्ठं च शतक्रतुम्  १०३४
दृष्ट्वा स्वर्गमवाप्नोति गोसहस्रफलं लभेत्
अग्नेराङ्गीरसीं दृष्ट्वा प्रतिमां प्राप्नुयाद् दिवम्  १०३५
तैजसे तु नरः स्नात्वा दृष्ट्वा प्रेताधिपं यमम्
स्वर्गलोकमवाप्नोति तिलधेनुफलं भवेत्  १०३६

स्नात्वा तु पुष्करे तीर्थे दृष्ट्वा सूर्यसुतं तथा
सर्वपापविनिर्मुक्तः स्वर्गसोके महीयते १०३७
प्रेताधिपं वसिष्ठं च सुतङ्केशं तथा यमम्
दृष्ट्वैकैकमथैतेभ्यो मुच्यते सर्वकिल्बिषैः १०३८
ताराराज्यां विशेषेण दृष्ट्वा ह्येते महाबलाः
दृष्ट्वा तमर्चितं देवं विरूपाक्षमिति श्रुतम् १०३९
नाप्नोति सर्वकालेषु भयं राक्षससम्भवम्
दृष्ट्वा तु वारुणं देवं राजञ्च बलिना कृतम् १०४०
सर्वपापविनिर्मुक्तो वारुणं लोकमाप्नुयात्
मानसस्योत्तरे कूले महापद्मजलाशये १०४१
स्नात्वा दृष्ट्वैव भवनं पुलस्त्येन विनिर्मितम्
गोदानफलमाप्नोति व्याधिभिश्च विमुच्यते १०४२
दृष्ट्वा धनेश्वरं देवं वितस्ताक्षसमीपतः
कपटेश्वरपार्श्वे च दृष्ट्वागस्त्येन विनिर्मितम् १०४३
सेतारं गोतमस्वामिं सौमुखं सुरभीकृतम्
दृष्ट्वैकैकमथैतेभ्यो धनवानभिजायते १०४४
दृष्ट्वा शशाङ्कं राज्ञा तु सुचन्द्रेण विनिर्मितम्
चन्द्रलोकमवाप्नोति नरो नास्त्यत्र संशयः १०४५
मणिभद्रं तथा दृष्ट्वा धनवानभिजायते १०४६
कामदेवमगस्त्येन पर्वतोपरि निर्मितम्
दृष्ट्वा सुखमवाप्नोति रूपवानभिजायते १०४७
पुलस्त्यनिर्मिता देवी भुवि भेडेति विश्रुता १०४८
पुलस्त्यनिर्मितां दृष्ट्वा केशवेनोपबृंहिताम्
सर्वपापविनिर्मुक्तो विद्यामाप्नोत्यनुत्तमाम् १०४९
दृष्ट्वा विशोकां काश्मीरां केशवेनोपबृंहिताम्
प्रतिष्ठितां केशवेन विष्णुलोके महीयते १०५०
भीमादेवीं तथा दृष्ट्वा श्रियमाप्नोत्यनुत्तमाम्

तथा कापिञ्जलीं देवीं तथा देवीं सुरेश्वरीम्  १०५१
भद्रेश्वरीं गौतमेशीं देवीं कालशिलामपि
तथोद्योगश्रियं नाम्नीं गवाक्षीं चण्डिकामपि  १०५२
दुर्गं गौरीं सुविजयां शकुनीं ब्रह्मचारिणीम्
चक्रेश्वरीं तथा दृष्ट्वा मनोरथमवाप्नुयात्  १०५३
चक्रस्वामिसमीपे च दृष्ट्वा देवीं हराङ्कगाम्
सर्वपापविनिर्मुक्तो रुद्रलोकमवाप्नुयात्  १०५४
कार्तवीर्यार्जुनस्वामिं दृष्ट्वा तं च दिवाकरम्
मार्तण्डं कश्यपस्वामिं विश्वगश्वकृतं रविम्  १०५५
सुचन्द्रेशं सुचक्रेशं सुरभीस्वामिनं रविम्
दृष्ट्वैकैकमथैतेभ्यो हयदानफलं लभेत्  १०५६
ब्रह्माणं वरदं दृष्ट्वा शैलरूपधरं स्वयम्
विष्णुस्वामिं हरस्वामिं कश्यपस्वामिनं तथा  १०५७
दृष्ट्वैतान् स्वर्गमाप्नोति भूमिपालपितामहान्
चक्रस्वामिसमीपस्थं हरं दृष्ट्वा सुदर्शनम्  १०५८
स्वयम्भुवं वह्निकृतं तथा वै पिङ्गलेश्वरम्
बिन्दुनादेश्वरं देवं देवं भद्रेश्वरं तथा  १०५९
चन्द्रेश्वरं सज्येष्ठेशं वालखिल्येश्वरं हरिम्
केशवेशं समेशं च धौम्येशं वरुणेश्वरम्  १०६०
चक्रेश्वरं सचन्द्रेशं कश्यपेशं विलोहितम्
कामेशं सवासिष्ठेशं भूतेशं सगणेश्वरम्  १०६१
सूर्येश्वरं महाराज भस्मेशं विमलेश्वरम्
दृष्ट्वैकैकमथैतेभ्यो मुच्यते सर्वकिल्बिषैः  १०६२
हिमाचलेशं शङ्खेशं देवं वैवट्टिलेश्वरम्
महानदीश्वरं शम्भुं वरदं कश्यपेश्वरम्  १०६३
राजेश्वरं नृसिंहेशं भवेशं धनदेश्वरम्
सदा संनिहितो राजन् देवो भूतेश्वरो हरिः  १०६४

मुच्यते किल्बिषैः सर्वैस्तत्र दृष्ट्वैव नन्दिनम्
नन्दीश्वरो प्रसन्नो हि सदा भूतेश्वरस्तथा १०६५
सांनिध्यं राजशार्दूल लोकानां हितकाम्यया
सदा सन्निहितस्तत्र नन्दी भक्त्या हरस्य तु १०६६
तोयमध्यगतं दृष्ट्वा सम्प्राप्तं कपटेश्वरम्
गोसहस्त्रमवाप्नोति सम्पूज्याभीप्सितां गतिम् १०६७
गोनन्दः
कथमाराधितो देवो नन्दिना वदतां वर
नित्यं सन्निहितो देवो येन भूतेश्वरे स्थितः १०६८
बृहदश्वः
शृणु राजन् कथां दिव्यां सर्वकिल्विषनाशिनीम्
नन्दिनं प्रति भूपाल यथावृत्तं मनोरमम् १०६९
शिलादो नाम विप्रोऽभूत् पुरा पुत्रविवर्जितः
तेन वर्षशतं भुक्त्वा शिलाचूर्णं नराधिप १०७०
नन्दिपर्वतमासाद्य महादेवः प्रसादितः
पुत्रार्थे तु तदा तस्य देवदेवोऽनुकम्पया १०७१
पुत्रत्वे नन्दिनं प्रादात् स्वगणेशं महाबलम्
दीयमानस्तु पुत्रत्वे नन्दी प्रोवाच शङ्करम् १०७२
अनुग्रहाद् द्विजस्यास्य पुत्रोऽहं भविता प्रभो
किन्त्वयोनिभवो देव भवेयं तस्य पुत्रकः १०७३
चिरं च न च वत्स्येऽहं मानुष्ये त्वद्विना कृतः
तमुवाच हरो देवः प्रहसन्ननुकम्पया १०७४
उमाविवाहे शप्तोऽसि भृगुणा त्वं गणोत्तम
अपूजितेन मानुष्ये तेनापि भविता ध्रुवम् १०७५
तेनैव च शरीरेण मत्समीपमुपेष्यसि
ततः प्रभृति मानुष्ये वत्स्यसे त्वं गणोत्तम १०७६
वत्स्यसे मत्समीपञ्च प्राकाम्येण यथासुखम्

वत्स्यसे किं च मानुष्ये भृगुशापबलात्कृतः १०७७
तत्रापि तेऽहं वत्स्यामि प्राकाम्येण गणेश्वर १०७८
एवं भूतेश्वरे नन्दी नित्यं वसति पार्थिव
प्राकाम्येण हरो देवस्तथा तदनुकम्पया १०७९
गोनन्दः
कथं जातः शिलादस्य नन्दी पुत्रत्वमागतः
कथं च स्वशरीरेण गाणपत्यमवाप्तवान् १०८०
बृहदश्वः
अयोनिजः शिलादेन शिलां चूर्णयता तदा
सम्प्राप्तस्तु शिलामध्यात् पुत्रो नन्दी शशिप्रभः १०८१
तं प्राप्य तनयं विप्रः शिलादो हर्षमागतः
संस्काराणि तु पुत्रस्य सर्वाणि कृतवांस्तथा १०८२
क्रियमाणेषु पुत्रस्य संस्कारेषु तथा द्विजः
अल्पायुषं स शुश्राव ब्राह्मणेभ्यः स्वयं सुतम् १०८३
श्रुत्वारोदत् स धर्मात्मा शिलादः पुत्रवत्सलः
तं रुदन्तं तदा नन्दी वारयामास धर्मवित् १०८४
मा त्वं रुदस्व ताताद्य तवाहं प्रियकाम्यया
आराध्य शङ्करं देवं दीर्घाप्स्यामि जीवितम् १०८५
एवमुक्त्वा स पितरं प्राप्तानुज्ञस्ततः स्वयम्
हरमुकुटमित्याख्यातं शृङ्गं हिमवतः शुभम् १०८६
जगाम सहसा नन्दी तपसे कृतनिश्चयः १०८७
तस्य शृङ्गस्य पूर्वार्धे सरोऽस्ति विमलोदकम्
कालोदकमिति ख्यातं सर्वकिल्बिषनाशनम् १०८८
तस्मिन्नन्दी शिलां गृह्य गुर्वीं मूर्धन्यतन्द्रितः
आराधयामास हरं रुद्रजापरतो जले १०८९
तस्य वर्षशतं रुद्रं जपतः सलिले गतम्
ततो वर्षशते पूर्णे देवी देवमभाषत १०९०

पुत्रो मे भगवन् नन्दी कालोदे तप्यते तपः
वरदानेन तं देव योजयस्वाशु मा चिरम् १०९१
एवमुक्तस्तदा देव्या वाराणस्यां नराधिप
देव्या सह ततो देवो मार्गेण क्षितिगामिना १०९२
प्रदेशे वृषभारूढो न चादृश्यत केनचित्
स प्रयागमतिक्रम्य तथायोध्यां महापुरीम् १०९३
पुण्यं च नैमिषारण्यं गङ्गाद्वारमतः परम्
स्थानेश्वरात् कुरुक्षेत्रं तथा विष्णुपदं सरः १०९४
शतद्रुं च विपाशां च पुण्यतोयामिरावतीम्
देविकां चन्द्रभागां च तथा विष्णुपदं शुभम् १०९५
विशोकां विजयेशं च वितस्तासिन्धुसङ्गमम्
एतान्सर्वानतिक्रम्य प्रययौ भरतं गिरिम् १०९६
तस्य मूलमथासाद्य देव्या वचनमब्रवीत्
इहैव तिष्ठ तावत् त्वमहं यास्याम्यतः परम् १०९७
वृषेण सहिता देवि पर्वतेऽस्मिन् हि यः पथा
करोत्यारोहणं तस्य महत् पुण्यफलं स्मृतम् १०९८
पथा त्वं न समर्थासि सुकुमारासि देवि यत्
आरोढुं तेन यास्येऽहमेक एवाद्य सत्वरः १०९९
तस्माद्देशात् प्रवृत्तस्तु गन्तुं देववरः पथा
पथेश्वराख्यस्तत्रेष्टो देवस्यायतनोऽभवत् ११००
आरुरोह यथा शैलं पथा देवो महेश्वरः
तदा वृद्धिमगाच्छैलो महतीं भूरिदक्षिणः ११०१
वर्धमानं तु तं ज्ञात्वा श्रान्तः क्रुद्धो महेश्वरः
रूपं कृत्वा महद् घोरं पदा मूर्धन्यताडयत् ११०२
ततः प्रभृति तच्छैलं मुण्डपृष्ठं प्रकीर्तितम्
मुण्डपृष्ठं शरीरेण स्पृष्ट्वा सर्वेण मानवः ११०३
अशुभं कीर्तयित्वा च तस्मात् पापात् प्रमुच्यते

देवेन ताडितश्छैलो रूपं मानुष्यमास्थितः  ११०४
प्राञ्जलिर्देवदेवेशमुवाच कृपणो ह्यहम्
ततः प्रसन्नो देवेशः शैलमाह कृपान्वितः  ११०५
मम पादप्रहारेण निर्गतं यज्जलं तव
कृपाणीतीर्थमित्येतद् भुवि यास्यति पर्वत  ११०६
मुण्डपृष्ठं गिरिं कृत्वा सौम्यं रूपमथास्थितः
अप्सरोभिर्युतो यत्र तीर्थमप्सरसां हि तत्  ११०७
ततो ब्रह्मसरो नाम दृष्ट्वा तीर्थं मनोरमम्
हंसरूपधरः शैलं पाटयामास सत्वरः  ११०८
हंसरूपेण यच्छैले कृतं छिद्रं महात्मना
हंसद्वारमिति प्रोक्तं सर्वकिल्विषनाशनम्  ११०९
दृष्ट्वा तीर्थौ महादेवस्तथा वातिकषण्डकौ
कपिलातीर्थमासाद्य स ददर्श पितामहम्  १११०
देवैर्वृतं महाभागं यजन्तमृषिभिस्तदा  ११११
हंसरूपधरं दृष्ट्वा ब्रह्मा देवं महेश्वरम्
जानुभ्यामवनिं गत्वा ववन्दे परमेश्वरम्  १११२
दृष्ट्वा तु प्रणतं देवं ब्रह्माणं जगतः प्रभुम्
प्रणम्य शक्रः प्रोवाच यत् तच्छृणु महीपते  १११३
शक्रः
नमस्ते देवदेवेश जगत्कारणकारण
त्रैलोक्यनाथ सर्वज्ञ सर्वेश्वर नमोस्तु ते  १११४
त्वत्तोऽन्यं नैव पश्यामि जगत्यस्मिन् हि कारणम्
त्वया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम्  १११५
स्रष्टा त्वमस्य सर्वस्य संहर्ता पालकस्तथा
यदोन्मीलयसे नेत्रे त्रैलोक्यस्योद्भवस्तदा  १११६
भवतीह जगन्नाथ यदा च स्वपिषे विभो
तदैतदखिलं सर्वं त्रैलोक्यं तु प्रणश्यति  १११७

भूमिर्धृता धारयति त्वयेदं सचराचरम्
त्वया धृता धारयन्ति तथैवापोऽखिलं जगत् ११९८
त्वत्तेजसा जगत् सर्वं वह्निर्धारयति प्रभो
त्वत्तेजसा तथा वायुर्भावयत्यखिलं जगत् १११९
शब्दयोनिं तथाकाशं जगद् धारयते प्रभो
वीर्येण ते महाभाग त्वं च प्रोक्तस्तथापरः ११२०
त्वं बुद्धिस्त्वं तथैवात्मा सर्वस्यास्य प्रकीर्तितः
अव्यक्तः पुरुषश्चैव रजः सत्त्वं तथा तमः ११२१
इन्द्रियाणीन्द्रियार्थाश्च भूततन्मात्रसंज्ञकः
ज्ञाता ज्ञेयं तथा क्षेत्रं क्षेत्रज्ञः परमेश्वरः ११२२
ध्याता ध्येयं तथा ध्यानं यज्ञानि विविधानि च
सर्वमेतत्त्वमेवैकस्त्वत्तः किमपरं प्रभो ११२३
यन्नतोसि महाभाग एतन्मे संशयो महान् ११२४
बृहदश्वः
एवमुक्तस्तु शक्रेण ब्रह्मा वचनमब्रवीत्
एषा तनुर्द्वितीया मे शार्वी परमपावनी ११२५
तपसा महता युक्ता यन्नतोऽस्मि शतक्रतो
त्वं च सर्वैः सुरैः साकं नमस्कृत्वा प्रसादय ११२६
एवमुक्तस्ततः शक्रः सर्वैः सुरगणैर्वृतः
तुष्टाव देवदेवेशं त्रिपुरान्तकरं हरम् ११२७
प्रसादाद् ब्रह्मणस्तस्य यथातथ्येन शंकरम् ११२८
शक्रः
नमस्ते देवदेवेश मायावृतजगत्त्रय
यजमानो मही खं च तोयाग्नीन्द्वर्कवायवः ११२९
तनवस्ते विनिर्दिष्टा याभिर्व्याप्तं जगत् त्रयम्
ब्राह्मीं तनुं तथास्थाय राजसीं त्वं जगद्गुरो ११३०
लोकान् सृजसि भूतात्मंस्तव कार्यं न विद्यते

पौरुषीं तनुमास्थाय सात्त्विकीं त्वं महेश्वर ११३१
पालयस्यखिलं देव त्रैलोक्यं साक्षिवत् स्थितः
कालाख्यां तामसीं कृत्वा जगत् संहरसे तथा ११३२
वृषरूपधरो धर्मो वाहनत्वमुपागतः
वामार्धं दयिताकायं ब्रह्मचारी सदा भवान् ११३३
नमः शशांकलेखांकजटाभार महेश्वर
गंगातरंगनिर्धूतजटाभार नमोऽस्तु ते ११३४
त्रिपुरारे नमस्तेऽस्तु नमस्त्वन्धकघातिने
शूलाग्रभिन्नदैत्यांशरुधिरार्द्र नमोऽस्तु ते ११३५
कपालमालिने तुभ्यं पार्वतीदयिताय च
उग्रायुधाय भीमाय भीमायुधधराय च ११३६
ऊर्ध्वलिङ्गाय शीघ्राय क्रथाय क्रथनाय च
मंगल्याय वरेण्याय महाहंसाय मीढुषे ११३७
भीमाक्षाय भुसुण्डाय व्यालयज्ञोपवीतिने ११३८
क्षमस्व मम देवेश यन् मयासि न पूजितः
तवैव मायया पूर्वं मोहितेन जगत्प्रभो ११३९
प्रसन्नोऽसि ध्रुवं शम्भो येन ज्ञातोऽसि वै मया
सुप्रसादोऽसि देवेश प्रणतोऽस्मि महेश्वर ११४०
बृहदश्वः
एवं स्तुतस्तु शक्रेण ब्रह्मणा ऋषिभिः सुरैः
हंसरूपं तदा त्यक्त्वा स्वेन रूपेण शङ्करः ११४१
जगाम ब्रह्मणो यज्ञं देवानां दर्शनं ददौ
आनाययामास तदा देवीं देवो वृषं तथा ११४२
तत्रैव देवदेवेशः समाप्ते ब्रह्मणः क्रतौ
सर्वैर्देवगणैः साकं ययौ कालोदकं सरः ११४३
ददर्श नन्दिनं तत्र शीतक्षुद्भावकर्षितम्
मृत्युनान्वीयमानेन बन्धुनेव नराधिप ११४४

दृष्ट्वोवाच महादेवो नन्दिनं जपतां वरम्
वरं वरय भद्रं ते उत्तिष्ठोत्तिष्ठ पुत्रक  ११४५
दृष्ट्वा देवं हरं देव्या पार्वत्या सह संस्थितम्
सर्वैर्देवगणैः सार्धं तत्याज मरणाद् भयम्  ११४६
शिलां त्यक्त्वा समुत्थाय तोयमध्यात् ससंभ्रमम्
पूजयामास देवेशं वाग्भिरद्भिस्तथैव च  ११४७
पूजितः शंकरस्तेन प्रहसन् वाक्यमब्रवीत्
रुद्रजापेन ते तात तपसा महता तथा  ११४८
परितुष्टोऽस्मि भद्रं ते मत्समीपे निवत्स्यसि
अनेनैव शरीरेण नास्ति ते मृत्युतो भयम्  ११४९
स्मरस्व पूर्वकं जन्म प्रतीहारो भवान् मम
शिलादेन द्विजेन्द्रेण प्राप्तः त्वं तपसा ततः  ११५०
तत्पुत्रेण त्वया पुत्र शिलादस्तारितस्तथा
गणेश्वरत्वमासाद्य मया सह निवत्स्यसे  ११५१
अस्माद् योजनमात्रेण पूर्वे भागे गणो मम
त्वया सार्धं निवत्स्यामि भूत्वा भूतेश्वरो हरः  ११५२
तव नन्दिन् प्रतिष्ठानं वसिष्ठो भगवानृषिः
कर्ता देशे शुभे तस्मिन् मम चाप्युत भूतले  ११५३
संनिधानं करिष्यामस्तत्र नित्यं वयं द्विज
पूर्वोत्पन्नः स ज्येष्ठेशस्तत्र लिङ्गो मम द्विज  ११५४
तत्रापि संनिधानं मे नित्यं विज्ञातुमर्हसि
ऋषिकोटिसहस्राणि मद्भक्त्या वा द्विजोत्तम  ११५५
तत्र संस्नापयन्ति स्म ज्येष्ठेशं ते सदैव तु
ब्रह्मन् दिव्येन तोयेन शुभेनोत्तरमानसात्  ११५६
तेषां तपः प्रभावेन भक्त्या च मम पार्षद
सोदरस्य च नागस्य स्थानमुत्तरमानसः  ११५७
स्वयं प्राप्तो महाभाग तत्र रंस्यसि नित्यशः

यस्माद्देशात्तथा याति दक्षिणेन महानदी ११५८
हिरण्यिनी पुण्यजला नाम्ना कनकवाहिनी
ज्येष्ठेशे वसते भूतैर्वस प्राकाम्यतो द्विज ११५९
मत्समीपमथाभ्येहि देहेनान्येन पुत्रक
एवमुक्त्वा तु देवेशो नन्दिनं प्रणतं स्थितम् ११६०
मृत्युं विसर्जयामास सान्त्वयित्वा सुरारिहा
नन्दिनं च समादाय दृष्ट्वा चोत्तरमानसम् ११६१
तस्यैव सरसोभ्याशे शृङ्गं त्रैलोक्यविश्रुतम्
हरमुकुटमितिख्यातमारुरोह मुदान्वितः ११६२
तत्र संनिहितो नित्यं देवदेवो महेश्वरः
ज्येष्ठेश्वरसमीपे तु वसिष्ठोऽपि महायशाः ११६३
सर्वैर्देवगणैः सार्धं चक्रे भूतेश्वरं हरम्
तस्यैव पश्चिमां मूर्त्तिं स चकाराथ नन्दिनम् ११६४
एवं कृते ययुर्देवा यथागतमरिन्दम
सस्त्रुस्तीर्थानि च तथा ऋषयश्च तपोधनाः ११६५
एवं हि भृगुशापेन हरस्यानुग्रहेण च
तत्र संनिहितो नन्दी तत्प्रीत्या च महेश्वरः ११६६
नन्दीश्वरस्य या मूर्तिर्दुराचारैर्न दृश्यते
भूतेश्वरं तथा दृष्ट्वा मुच्यते सर्वकिल्विषैः ११६७
स्नात्वा च सोदरे पुण्ये दृष्ट्वा भूतेश्वरं हरम्
ज्येष्ठेश्वरं नन्दिनं च गाणपत्यमवाप्नुयात् ११६८
गोनन्दः
कपटेश्वरमित्युक्तं देवदेवस्य शूलिनः
पुण्यमायतनं तस्य समुत्पत्तिं वदस्य मे ११६९
संशयो मे महान् ब्रह्मन् कपटेश्वरकीर्तनात्
किमर्थं भगवान् शम्भुः प्रोच्यते कपटेश्वरः ११७०
बृहदश्वः

पुण्ये दृषद्वतीतीरे कुरुक्षेत्रे नराधिप
ऋषिकोटयः समुत्तस्थुः तपः परममास्थितः ११७१
द्रष्टुं देवेश्वरं रुद्रं तद्भक्त्या मरमेश्वरः
तानाह भगवान् स्वप्ने कश्मीरां द्रुतमाशुगाः ११७२
व्रजध्वं यत्र नागस्य भवनं विमलं महत्
कपटे तत्र दास्यामि दर्शनं भवतामहम् ११७३
एतत् स्वप्नं निशम्याथ कल्यमुक्त्वा परस्परम्
कश्मीरां सहिता जग्मुः शम्भुं देवं दिदृक्षवः ११७४
ते प्राप्य तस्य नागस्य भवनं जलमण्वपि
न पश्यन्ति जले काष्ठैः सर्वतः परवारिते ११७५
तत्र काष्ठानि संचाल्य करैस्ते ऋषिसत्तमाः
स्नातमात्रा ययुः सर्वे स्वशरीरेण रुद्रताम् ११७६
वासिष्ठो ब्राह्मणस्त्वेको नाम्ना गौरपराशरः
न सस्नौ न च तत् काष्ठं पस्पर्श च कुतूहलात् ११७७
तत्रस्थः शोषयामास निराहारः कलेवरम्
तमुवाच हरः स्वप्ने किमर्थं द्विज क्लिश्यसि ११७८
स्नात्वा संस्पृश्य काष्ठानि शीघ्रं त्वं व्रज रुद्रताम् ११७९
तमुवाच द्विजोरुद्रं प्रयतः प्राञ्जलिः स्थितः
सत्यं रुद्रत्वमासाद्य दृश्यसे त्वं जगद्गुरो ११८०
किन्त्वदृष्टे हि देवेशे नास्ति मे मनसो धृतिः
कपटे भवने दास्ये त्वयोक्तं दर्शनं प्रभो ११८१
तदप्राप्य न यास्यामि न च भोक्ष्यामि शंकर
तमुवाच ततो भूयः शंकरः प्रहसन्निव ११८२
दत्तं तु काष्ठरूपेण मया तेषां तु दर्शनम्
ते मां दृष्ट्वैव संप्राप्ता रुद्रत्वं तत् तथा द्विज ११८३
तवाधिकेन तपसा वरं द्दमि यथेप्सितम्
तत् त्वं वरय भद्रं ते रुद्रतां च तथा व्रज ११८४

गौरपराशरः
वरश्चेद् दीयते देव मम कामाङ्गनाशन
ऋषिभिस्त्वं यथा दृष्टः काष्ठरूपी महेश्वर ११८५
तथा त्वं देहि सर्वस्य जनस्येह निदर्शनम्
सर्वकालं जगन्नाथ लोकः क्लिश्यति पाप्मना ११८६
महेश्वरः
द्रक्ष्यन्ति ये जनाः सर्वे काष्ठरूपं समास्थितम्
कदाचिद् द्विजशार्दूल सर्वकालं तु नो द्विज ११८७
अयं च सततं नन्दी काष्ठरूपी गणो मम
दर्शनं दास्यते नृणां तदनुग्रहकाम्यया ११८८
तेन दृष्ट्वा च यास्यन्ति स्वशरीरेण रुद्रताम्
कपटेन च दास्यामि नराणां दर्शनं यदा ११८९
तदा संज्ञामवाप्स्यामि कपटेश्वर इत्युत
तोयस्य बहुलीभावो देशेऽस्मिन् ब्राह्मणोत्तम ११९०
दर्शनस्य मदीयस्य पूर्वरूपं भविष्यति
इत्येतत् कथितं तुभ्यं कपटेश्वरसम्भवम् ११९१
गोनन्दः
भगवन् श्रोतुमिच्छामि विष्णोरायतनान्यहम्
कश्मीरायां फलं तेषां येषां सन्निहितो हरिः ११९२
बृहदश्वः
नित्यं सन्निहितो देवो राजश्चक्रधरो हरिः
तं दृष्ट्वा पुण्डरीकाक्षं दशधेनुफलं लभेत् ११९३
नित्यं सन्निहितो देवो नरसिंहो जनार्दनः
तं दृष्ट्वा देवदेवेशमश्वमेधफलं लभेत् ११९४
देवः सन्निहितो राजन् नित्यं बहुसरस्तथा
स तु सन्निहितो राजन् पुण्ये देवसरे शुभे ११९५
वासिष्ठायामथैवात्र कद्रवार्चायां तथैव च

विनतार्चायां सन्निहितो गौतम्यां पार्थिवोत्तम ११९६
एता दृष्ट्वा केशवार्चा अग्निष्टोमफलं लभेत् ११९७
महापद्मस्य सरसःपुराये कूले तथोत्तरे
नृसिंहमपरं दृष्ट्वा ह्यग्निष्टोमफलं लभेत् ११९८
देवं शक्रकृतं दृष्ट्वा वरुणेन तथा कृतम्
ब्रह्मणा च धनेशेन यमेन च हरेण च ११९९
दिवाकरेण सोमेन वह्निना पवनेन च
कश्यपेनाथ भृगुणा पुलस्त्येन तथात्रिणा १२००
भूर्जस्वामिं महास्वामिं शतशृङ्गगदाधरम्
मेरोर्भवनपार्श्वे च भृगुस्वामिं जनार्दनम् १२०१
तैत्तिरीयेश्वरं देवं दराडकस्वामिनं तथा
भवस्य च तथा पार्श्वे रामस्वामिं जनार्दनम् १२०२
देवं नारायणं स्थानं पश्चिमे तु वरप्रदम्
गजेन्द्रमोद्धाणं देवं वराहस्य समीपगम् १२०३
वराहं च नृसिंहं च बहुरूपं वरप्रदम्
सप्तर्षीणां तथैवार्चाः सुमुखस्य समीपगाः १२०४
तुङ्गवासं च वरदं वरदं च स्वयम्भुवम्
गुहावासं च योगीश मनन्तं कपिलं मुनिम् १२०५
अश्वशीर्षं तथा मत्स्यं हंसं कूर्मं तथैव च
उतङ्कस्वामिनं देवं वालखिल्यकृतं तथा १२०६
गरुडं जलवासं च देवं भोगमयं तथा
दृष्ट्वैवकैकमथैतेभ्यो दशधेनुफलं लभेत १२०७
वैन्येन पृथुना पूर्वं मगधेषु प्रतिष्ठितम्
दृष्ट्वैवाप्नोति च फलं पुराडरीकस्य मानवः १२०८
गृध्रकूटे तथैवार्चां तथा भृगुकृतां शुभाम्
आश्रमस्वामि इत्युक्तां पर्वतादवतारिताम् १२०९
स्वदेशपार्श्वे रामेण भार्गवेण महात्मना

दृष्ट्वैव सर्वपापेभ्यो मुच्यते नात्र संशयः १२१०
गोनन्दः
गृध्रकूटाद् गिरिश्रेष्ठात् किमर्थं भृगुनिर्मिता
अर्चावतारिता ब्रह्मन् स्वाश्रमस्य समीपतः १२११
बृहदश्वः
पुरा पितृवधादर्चां रामः क्षत्रियमर्दनः
त्रिःसप्तकृत्वः पृथिवीं कृत्वा निःक्षत्रियां पुरा १२१२
एकविंशतिमे घाते प्राप्ते केचित्तु क्षत्रियाः
गिरिदुर्गमनुप्राप्ताः कश्मीरायां नृपोत्तम १२१३
रामोऽनुपदमागत्य ताञ्जघानातिरोषणः
तेभ्योऽपि क्षत्रियाः केचिद्धतशेषा महीपते १२१४
तद्भयेनागतास्त्यक्त्वा कश्मीरां राजसत्तम
नदी मधुमती यत्र तथान्या रजनिर्मला १२१५
तथापि रामस्तान् गत्वा पातयामास रोषतः १२१६
निःशेषान् क्षत्रियान् हत्वा रुधिराक्तकरस्तथा
प्रतिष्ठामकरोद्राजन् केशवस्य महात्मनः १२१७
राजावासमिति प्रोक्तं सर्वलोकेषु विश्रुतम्
तद् दृष्ट्वा शीघ्रमाप्नोति कार्यसिद्धिं नरोत्तम १२१८
रौद्रभावेन रामेण यदा चार्चा विनिर्मिता
रौद्रभावमथास्थाय तस्यां सन्निहितो हरिः १२१९
अर्चयन्ति च रौद्रेण तं च भावेन मानवाः
रौद्रभावान् महीनाथ नित्यं पशुवधादिना १२२०
ततो रामोऽपि धर्मात्मा पूर्वं क्षत्रियशोणितैः
कृत्वा कुण्डाञ्जगामाथ कुरुक्षेत्रे महीपते १२२१
पितॄन् स तेष्वथाभ्यर्च्य मुदं लेभे वरारिहा
तमूचुः पितरः प्रीता राम राम महाभुज १२२२
कर्मणोऽस्मान् निवर्तस्व तीर्थयात्रां तथा कुरु

पलायमानान् भीतांश्च हतवानसि पार्थिवान्  १२२३
तेन पापेन ते पुत्र शरीरं कल्मषं यदा
तस्माद् व्रजस्व तीर्थानि पावनार्थमिहात्मनः  १२२४
भविष्यसि यथावत् त्वं शुद्धदेहश्च पुत्रक
नापैष्यति हि ते तावत् करेभ्यो रुधिरं दृढम्  १२२५
यदा करौ विरुधिरौ पुत्र तव भविष्यतः
तदा त्वं निर्मलीभूतः तपः कुरु यथासुखम्  १२२६
एवमुक्तस्तदा रामः पितृभिः पूजितस्ततः
चकार तीर्थयात्रां वै सर्वदेशेषु पार्थिव  १२२७
कृत्वा जगाम कश्मीरां तथा च स महीपते
आप्लुत्य तीर्थेषु तदा गृध्रकूटमुपागमत्  १२२८
शुद्धा सरस्वती चैव संयोगं यत्र गच्छतः
तत्र स्नातस्य रामस्य करौ शुद्धिमुपागतौ  १२२९
तस्य तीर्थस्य रामोऽपि वरं प्रादान्महायशाः
अस्मिन् तीर्थे नरः स्नात्वा सर्वं मोक्ष्यति किल्विषम्  १२३०
शुद्धदेहस्तदा गन्ता भृगूणां समलोकताम्
एवं तु निर्मलीभूतो रामः ह्परबलार्दनः  १२३१
पथेश्वरमथास्थाय तपस्तेपे सुदारुणम्
नदीं सम्प्राप्य पुण्योदां तदा ब्रह्मसरोद्भवाम्  १२३२
यदा तस्यां तु रामेण तपस्तप्तं महात्मना
तदा रामह्रदेत्येवं नदी सा भुवि विश्रुता  १२३३
तत्र संवत्सरं कृत्वा रामोऽपि परमं तपः
तपोऽर्थं गृध्रकूटस्य तदा मूलं जगाम सः  १२३४
यत्रास्य चागतौ शुद्धिं करौ पूर्वं महीपते
तस्माददूरे पुण्योदामनन्तस्य महात्मनः  १२३५
भवनं नागराजस्य तपस्तेपे महात्मनः
प्रतिष्ठानं तथा चक्रे तस्य देवस्य शार्ङ्गिणः  १२३६

तत्रासतस्ततस्तस्य रामस्याक्लिष्टकर्मणः
आश्रमस्वामिनं द्रष्टुं प्रययौ ब्राह्मणोत्तमः १२३७
दातुं गां देवदेवस्य तामादाय तु सत्वरः
तत्रासावपथि प्राणांस्तस्मिंस्तत्याज पर्वते १२३८
त्यक्त्वा च गां महीनाथ ब्राह्मणोऽपि निवर्तितः
प्रायश्चित्तीयतां प्राप्य दुःखशोकसमन्वितः १२३९
स रामाश्रममागत्य वासिष्ठो धर्मनिश्चलः
यथावृत्तमथाचख्यौ रामाय सुमहात्मने १२४०
तमुवाच ततो रामः पश्यन् दिव्येन चक्षुषा १२४१
दिव्योत्पन्ना द्विजश्रेष्ठ दिव्यनारी मनोरमा
देवर्षिं वञ्चयामास गोरूपेणाथ नारदम् १२४२
तेन विज्ञाय सा शप्ता तव गोत्वमुपागता
तेनैव तस्य शापान्तः कृतो ब्राह्मणसत्तम १२४३
गोस्वामिना नीयमाना गृध्रकूटे शिलोच्चये
तनुं त्यक्त्वा ततो भूयो भविष्यसि वराप्सराः १२४४
मोक्षिता सा त्वया शापान्नतेऽस्ति द्विज पातकम्
गोदानफलसंयुक्तो मत्प्रसादाद्भविष्यसि १२४५
गच्छ पश्य स्वदेवेशं तथाश्रमनिवासिनम्
तं दृष्ट्वा सर्वपापेभ्यो विनिर्मुक्तो भविष्यसि १२४६
अहं हि देवप्रवरमाराध्य मधुसूदनम्
इहानयिष्ये तामर्चां लोकस्य हितकाम्यया १२४७
प्रायशो धेनुदानेन लोकोऽर्चयति तं हरिम्
पर्वतारोहणे क्लेशो महान् विप्र गवां तथा १२४८
आनीतायामिहार्चायां द्विजेन्द्र न भविष्यति
तस्मिन्नेव तदा स्थाने तपस्तेपे स भार्गवः १२४९
ततः संवत्सरस्यान्ते ददर्श मधुसूदनम्
दिव्येन चक्षुषा राजन् प्रसन्नमग्रतः स्थितम् १२५०

तुषारचयसंकाशं श्वेताम्बरविभूषितम्
मुकुटेनार्कवर्णेन कुराडलैश्च विराजितम् १२५१
चतुर्मुखं चतुर्बाहुं चतुर्वेदाश्रयान्वितम्
शरीरधारिभिः शस्त्रैरुदीरितजयस्वनम् १२५२
तं दृष्ट्वा प्रणतो राजंस्तुष्टाव मधुसूदनम्
परशुरामः
नमस्ते देवदेवेश प्रणतार्तिविनाशन १२५३
चतुर्मूर्ते महामूर्ते चतुर्वेद महाभुज
गोविन्द पुराडरीकाक्ष वराहाद्य नमोस्तु ते १२५४
दंष्ट्राग्रोद्धृतभूभाग संचूर्णितशिलोच्चय
त्वं सदैव वराहोसि येनेदं धार्यते जगत् १२५५
करजाग्रविनिर्भिन्नहिररायकशिपूरसे
नमस्तुभ्यं नृसिंहाय ज्वालामालाकुलात्मने १२५६
त्रिविक्रमाय देवाय नमस्ते विजिगीषवे
सोमभूषितवक्त्राय नमोऽश्वशिरसे प्रभो १२५७
त्वं देव सर्वदेवानां दुःखितानां परा गतिः
इन्द्रियाणीन्द्रियार्थाश्च महाभूतानि यानि च १२५८
मनो बुद्धिस्तथैवात्मा अव्यक्तं पुरुषोद्भवम्
सत्त्वं रजस्तमश्चैव ब्रह्मा विष्णुर्महेश्वरः १२५९
त्वया सर्वमिदं व्याप्तं त्रैलोक्यं सचराचरम्
त्वया विना न पश्यामि किंचिदेव जगत्त्रये १२६०
त्वत्तेजसा मया देव निहताः क्षत्रिया भुवि
कोटिसंख्याश्च निहताः सैंहिकेया महाबलाः १२६१
सूक्ष्मातिसूक्ष्म देवेश महद्भ्योऽपि महत्तर
क्षीरोदकन्यादयित कामरूप नमोस्तु ते १२६२
कामकामद कामारिपूजिताघविनाशन
चतुर्भिः सततं वक्त्रैः पद्मजन्माभिसंस्तुत १२६३

कमोहं ते करिष्यामि जगत्कारणकारण
स्तुत त्रैलोक्यनाथेश सर्वथैव नमोऽस्तु ते १२६४
नमः पार्श्वेषु ते देव नमस्ते सर्वतः प्रभो
पर्वतेषु समुद्रेषु लोकेषु गगने तथा १२६५
नमस्तेऽस्तु नमस्तेऽस्तु सर्वत्रैव नमोऽस्तु ते १२६६
एवं स्तुतस्तु रामेण राममाह जनार्दनः
राम राम महाबाहो वरं वरय सुव्रत १२६७
वीर्येण तपसा देव स्तोत्रेणानेन सुव्रत
परितुष्टोऽस्मि ते वत्स यथा नान्यस्य कस्यचित् १२६८
परशुरामः
भृगुणा निर्मितामर्चा गृध्रकूटाग्रतः प्रभो
इहानयितुमिच्छामि तन्मेऽनुज्ञातुमर्हसि १२६९
भगवान् उवाच
एवं कुरु यथेष्टं ते जनो मुच्यते किल्विषात्
क्लेशं विना भृगुश्रेष्ठ कृतस्तेऽनुग्रहो मया १२७०
बृहदश्वः
एवमुक्त्वा ययौ विष्णुस्तदान्तर्धानमीश्वरः
रामोऽपि गृध्रकूटात्तां तदार्चामवतारयत् १२७१
मध्ये चकार तां भक्त्या स्वार्चामनन्तकूटयोः
तां दृष्ट्वा फलमाप्नोति पुण्डरीकस्य मानवः १२७२
रामोऽपि तपसा दीप्तो वाजिमेधमहाक्रतौ
दत्त्वा महीं कश्यपाय महेन्द्रपर्वतं गतः १२७३
एवं रामेण धर्मज्ञ गृध्रकूटान्नगोत्तमात्
स्वाश्रमस्य समीपे तु आनीता प्रतिमा शुभा १२७४
गोनन्दः
देशस्यास्य समीपे तु तीर्थानि वदतां वर
कथयस्वामितप्राज्ञ तस्मिंस्तीर्थे फलं च किम् १२७५

बृहदश्वः
आरुह्य गृध्रकूटं तु गोसहस्रफलं लभेत्
वितस्तामधुमत्योश्च सङ्गमे त्रिदिवं व्रजेत् १२७६
इन्द्रकीलमथारुह्य गोसहस्रफलं लभेत्
कुमुनारीं नदीं प्राप्य स्नातो मुच्येत किल्विषैः १२७७
कृष्णावितस्तासंयोगे गोसहस्रफलं लभेत्
तथा मधुमतीतीरे शाण्डिल्येन निवेशितम् १२७८
दृष्ट्वा चक्रेशमाप्नोति वह्निष्टोमफलं नरः
दृष्ट्वा दुर्गामवाप्नोति काममेव यथेप्सितम् १२७९
तत्रैव शाण्डिली नाम नदी पापनिषूदनी
तस्यां स्नातो दिवं याति पुरुषो गतकल्मषः १२८०
शाण्डिलीमधुमत्योश्च स्नातो यः सङ्गमे नरः
सर्वपापविनिर्मुक्तः स्वर्गलोकं स गच्छति १२८१
राजवासं हरिं दृष्ट्वा काममाप्नोत्यभीप्सितम्
रजोविनिर्मलं प्राप्य स्नात्वा मुच्येत किल्विषैः १२८२
तस्यां देवी उमा स्नाता प्रथमं तु रजोवती
दृष्ट्वा तु गौरीशिखरं चन्द्रलोकमवाप्नुयात् १२८३
पूर्वमासीदुमा राजन् नीलोत्पलसमप्रभा
सा तत्र तपसा लेभे गौरं वर्णं मनोहरम् १२८४
कृष्णपक्षेऽपि तं शैलं सज्योत्स्नमिव मानद
पश्यन्ति मानवा नित्यं तत्र वै महदद्भुतम् १२८५
तेललां भूर्जलां पुण्यामवगाह्य पृथक् पृथक्
तुल्यं फलमवाप्नोति गोशतस्य महीपते १२८६
तयोस्तु सङ्गमे स्नात्वा वाजपेयफलं लभेत्
मधुमत्यास्तयोश्चैव स्नातस्य नृप सङ्गमे १२८७
कथितं मुनिभिः पुण्यं गजदानस्य यत् फलम्
तथा प्रभवमासाद्य मधुमत्या मनोहरम् १२८८

सर्वपापविनिर्मुक्तो रुद्रलोके महीयते
उत्तरे मानसे स्नात्वा गोसहस्रफलं लभेत्  १२८९
पितरस्तर्पितास्तत्र कामान् यच्छन्त्यभीप्सितान्
हरमुण्डेनरः स्नात्वा दशगोदफलं लभेत्  १२९०
आरुह्य तदवाप्नोति राजसूयफलं नरः
तत्र गङ्गा सरिच्छ्रेष्ठा चन्द्रभ्रष्टा प्रतिष्ठिता  १२९१
यस्यां स्नातस्य पूयन्ते सर्वपापान्यसंशयम्
राजसूयमवाप्नोति गङ्गामानससङ्गमे  १२९२
देवतीर्थे नरः स्नात्वा भवत्युत्तरमानसे
वालखिल्यकृतेऽगस्त्ये तुल्यतेजा महर्षिभिः  १२९३
कालोदकं नन्दिकुण्डं शंखचक्रौ गदां तथा
पद्मं सकपिलातीर्थं तीर्थौ वातिकषण्डकौ  १२९४
तीर्थमप्सरसां पुण्यं ब्रह्मणः परमेष्ठिनः
कृपाणीतीर्थमासाद्य प्रत्येकं गोशतं लभेत्  १२९५
कालोदकं यत्र याति नदी मानससम्भवा
तत्र स्नातस्य पूयन्ते सर्वपापान्यशेषतः  १२९६
देववध्वस्तथा पुण्याः पुण्यं सूर्यसरः स्मृतम्
तारासरः चन्द्रसरः पुण्यं कालुषकं महत्  १२९७
ब्रह्मणो यागभूमिश्च तत्र पुण्या महीपते
शक्रतीर्थं देवतीर्थं तीर्थं ब्राह्मणकुण्डिका १२९८
दृष्ट्वैकैकमथैतेभ्यो गोशतस्य फलं लभेत्
हंसद्वारं च संगम्य स्वर्गमाप्नोत्यसंशयम्  १२९९
सिन्धोः प्रभवमासाद्य राजसूयफलं लभेत्
पौण्डरीकमवाप्नोति स्नात्वा बिन्दुसरस्यपि  १३००
मडवायां नरः स्नात्वा गोसहस्रं फलं लभेत्
सन्ध्यां नाम नदीं दृष्ट्वा मुच्यते सर्वकिल्विषैः  १३०१
अश्रद्धधानं नातीत्य साध्वभ्येति दृढव्रतम्

तत्राग्नितीर्थं दृष्ट्वैव वह्निलोके महीयते १३०२
नदी चित्रपथा पुराया मृगनन्दा तथा मृगा
गोदावरी वैतरणी तथा मन्दाकिनी शुभा १३०३
चन्द्रभागा गोमती च सर्वपापभयापहा
पृथगेतास्वाप्नोति गोशतस्य फलं नरः १३०४
यत्र चित्रपथा पुराया मडवा च महानदी
एकीभवन्ति स्नातस्य तत्र नश्यति किल्विषम् १३०५
स्वर्गलोकमवाप्नोति पुनाति स्वकुलं नरः
तथा चैता महानद्यः कथितास्ते महीपते १३०६
तासां तु सङ्गमाः पुरायाः सर्वे स्वर्लोकदर्शनाः
चित्रकूटो गिरिः पुराय उमा यत्र विवाहिता १३०७
तत्रानुलेपनं दिव्यं येन लिप्ततनुर्नरः
सुरूपभागी भवति सुभगश्चैव जायते १३०८
पद गव्यसरस्तत्र पञ्चगव्यसरः पृथक्
तत्रान्ये पञ्च भूपाल पुरायं तैलसरस्तथा १३०९
उद्वर्तनसरः पुरायं पुरायं चाप्यतसीसरः
सिद्धार्थकसरस्तत्र तथामलकवारिणः १३१०
मधुपर्कसरः पुरायं पुरायमुष्णोदकं तथा
एकमेकमथैतेभ्यो दृष्ट्वा स्वर्लोकमाप्नुयात् १३११
चित्रकूटमथारुह्य स्वर्गलोके महीयते
तीर्थं सप्तऋृषिं नाम सर्वकामफलप्रदम् १३१२
अश्वमेधसहस्रस्य राजसूयशतस्य च
गवां शतसहस्रस्य श्रेयान् सप्तऋृषेश्चरुः १३१३
श्राद्धं दानं तथा जप्यं स्नानं होमं तथार्चनम्
सर्वमक्षयतां याति यत् कृतं तत्र पार्थिव १३१४
वस्त्रापदमथासाद्य रुद्रलोके महीयते
छागलेश्वरमासाद्य काममाप्नोत्यभीप्सितम् १३१५

रुद्रस्यानुचरो भूत्वा तेनैव सह मोदते
परोष्णीप्रभवं प्राप्य गोसहस्रफलं लभेत् १३१६
उष्णोदकमथासाद्य गोसहस्रफलं लभेत्
सहस्रधारमासाद्य विष्णुलोके महीयते १३१७
क्रमता विष्णुना लोकान् कृतं पादेन तत् सरः
क्रमसारमिदं प्रोक्तं यथा विष्णुपदं च तत् १३१८
इष्टवान् क्रतुभिस्तत्र यदा देवः पितामहः
क्रमसारस्तदा प्रोक्तः सर्वकल्मषनाशनः १३१९
वसतिस्तत्र नागस्य कौण्डिन्यस्य यदा तदा
कौण्डिन्यसर इत्येव तस्य नाम प्रकीर्तितम् १३२०
तत्र स्नात्वा समभ्यर्च्य देवताः पितरस्तथा
दृष्ट्वा तु शिखरान् रम्यान् ब्रह्मविष्णुमहेश्वरान् १३२१
लोकत्रयमवाप्नोति तेषामेव न संशयः
ब्रह्मणो यागभूमिं तु दृष्ट्वा तत्र महीयते १३२२
स्वर्गलोकमवाप्नोति कुलमुद्धरते स्वकम्
तत्र क्षीरसरो रम्यं दृष्ट्वा मुच्यते किल्विषैः १३२३
समाराप्रभवं प्राप्य स्नात्वा कृष्णचतुर्दशीम्
सर्वपापविनिर्मुक्तो रुद्रलोके महीयते १३२४
सन्निकृष्टानि तीर्थानि कथितानि मया तव
सर्वेषां पापहर्तॄणि किं भूयः कथयामि ते १३२५
गोनन्दः
तीर्थानि द्विज मुख्यानि कश्मीरायां वदस्व मे
तेषां स्नाने च यत् पुण्यं तपसादग्धकिल्विष १३२६
बृहदश्वः
निःसृता सरसः पुण्या क्रमसारान्महानदी
कौण्डिन्या नाम या स्नाने पुण्डरीकफलप्रदा १३२७
तथा क्षीरनदी पुण्या गोशतस्य फलप्रदा

तयोः समागमे स्नात्वा गोसहस्रफलं लभेत्  १३२८
विशोकायां नरः स्नात्वा विशोकः श्रीसमन्वितः
फलं पुरायमवाप्नोति देवसत्रस्य मानवः  १३२९
कौरिडनी सह संयोगं यत्र याति विशोकया
तत्र स्नातस्य राजेन्द्र वाजपेयफलं भवेत्  १३३०
वृद्धतीर्थे नरः स्नात्वा यज्ञमाप्नोति गोसवम्
तत्र संनिहितो नित्यं वासुकिर्भुजगाधिपः  १३३१
देवलोकमवाप्नोति स्नात्वा देवसरस्यपि
अग्नितीर्थे नरः स्नात्वा वह्निलोकमवाप्नुयात्  १३३२
नदी सरस्वती नाम यस्यां स्नातो दिवं व्रजेत्
पूर्वदक्षिणभागे तु स्थिता देवसरस्यपि  १३३३
विनतास्वामिपुरतः कद्रूस्वामिसमीपतः
तीर्थयोस्तु नरः स्नात्वा गोशतस्य फलं लभेत्  १३३४
सन्ध्या देवी नदी पुराया यस्यां स्नातस्य मानद
व्यपैति कल्मषं देहात् स्वर्गलोकं च गच्छति  १३३५
सन्ध्या पुष्करिणी त्वन्या पूर्वतुल्यफलप्रदा
अवगाह्य नरो भक्त्या पुरायां ब्राह्मणकुरिडकाम्  १३३६
नीलकुराडं वितस्ताख्यं शूलघातं तथैव च
तीर्थं त्रिनामकं दृष्ट्वा स्वर्गलोके महीयते  १३३७
तथा विनशनं प्राप्य वाजपेयफलं लभेत्
ब्राह्मणकुरिडकायां च नीलकुराडे च पार्थिव  १३३८
अक्षयं सर्वमुद्दिष्टं दानं श्राद्धं तथा तपः
वितस्तोन्मज्जने स्नात्वा गोसहस्रफलं लभेत्  १३३९
पञ्चयज्ञानवाप्नोति स्नात्वा वै पञ्चहस्तके
प्रत्यहं ये विनिर्दिष्टा गृहस्थस्य महीपते  १३४०
लोकपुरायं हि तन्नाम सर्वपापहरं परम्
कापोतके नरः स्नात्वा गोप्रदानफलं लभेत्  १३४१

विष्णवाश्रमे नृसिंहस्य पुरतः पार्थिवोत्तम
वितस्तोन्मज्जनं पुण्यं विष्णुलोके महीयते १३४२
स्नातस्य ध्यानधारिण्यां गोसहस्रफलं भवेत्
वितस्ताध्यानधारिण्योः संगमे पापनाशने १३४३
पुण्यं फलमवाप्नोति वाजपेयस्य मानवः
वितस्तान्तर्हिता तत्र प्रविश्य ध्यानधारिणीम् १३४४
अन्तर्हिता गता शीघ्रं विशोका यत्र निम्नगा
धौम्याश्रमे तयोर्योगे राजसूयफलं स्मृतम् १३४५
चतुर्वेदीं नरो दृष्ट्वा कन्यादानफलं लभेत्
प्राप्य हर्षपथां जन्तुर्लभेद् बहु सुवर्णकम् १३४६
त्रिकोटीप्रभवं प्राप्य मुच्यते सर्वकिल्विषैः
प्राप्य चन्द्रवतीजन्म चन्द्रलोके महीयते १३४७
देवतीर्थे नरः स्नात्वा देवः पुत्रोऽपि जायते
त्रिकोट्यां तु नरः स्नात्वा देवलोके महीयते १३४८
स्नात्वा हर्षपथायां च शक्रलोके महीयते
चन्द्रवत्यां नरः स्नात्वा दशगोदफलं लभेत् १३४९
नदी हर्षपथा पुण्या तथा चन्द्रवती च या
सङ्गमं यत्र तत्रोक्तं राजसूयं मनीषिभिः १३५०
त्रिकोटीसङ्गमाद् गृह्य यावद् रौप्येश्वरं हरम्
तावत् क्षेत्रं समं ज्ञेयं वाराणस्याथवाधिकम् १३५१
रुद्रलोकमवाप्नोति स्नात्वा तु कपटेश्वरे
विषलिङ्गह्रदे पुण्ये रुद्रलोके महीयते १३५२
विजयेशाग्रतः स्नात्वा वितस्तायां महीपते
रुद्रलोकमवाप्नोति कुलमुद्धरते स्वकम् १३५३
पिङ्गलेशाग्रतः स्नात्वा विष्णुलोके महीयते
खण्डपुच्छाश्रमे स्नात्वा फलमेतदुदाहृतम् १३५४
पुण्डरीके नरः स्नात्वा पुण्डरीकफलं लभेत्

शूर्पारके नरः स्नात्वा गोप्रदानफलं लभेत् १३५५
वितस्ताध्यानधारिरयोः सङ्गमेऽन्नप्रदो नरः
अक्षयं फलमाप्नोति यावदिन्द्राश्चतुर्दश १३५६
सर्वे सन्निहितास्तीर्था नरसिंहाश्रमे तदा
वितस्ताध्यानधारिरयोः सङ्गमाद् गृह्य पार्थिव १३५७
कल्पषोडशनागस्य यावद् भवनमुत्तमम्
तावत् क्षेत्रं समं पुरयं प्रयागेरा नराधिप १३५८
गङ्गोद्भेदे नरः स्नात्वा भेडादेवी समीपतः
गङ्गास्नानफलं प्राप्य स्वर्गलोके महीयते १३५९
अवगाह्य कथां पुरयां दशगोदफलं लभेत् १३६०
औजसे धर्मराजस्य स्नात्वा तु पुरतो नरः
न दुर्गतिमवाप्नोति वाजपेयफलं लभेत् १३६१
तस्मिंस्तीर्थवरे राजन् श्राद्धमानन्त्यमश्नुते
मासि चाश्वयुजे कृष्णपञ्चदश्यां विशेषतः १३६२
स्नात्वा नारायरास्थाने विष्णुलोके महीयते
रामतीर्थे भवोत्से च फलमेतत् प्रकीर्तितम् १३६३
शैलपृष्ठे नरः स्नात्वा तीर्थे वैश्रवरास्य च
धनस्य भागी भवति यत्र यत्राभिजायते १३६४
कामतीर्थे नरः स्नात्वा कामभागभिजायते
तीर्थे चाप्सरसां स्नात्वा श्रीभागी भवते नरः १३६५
ऋषितीर्थे नरः स्नात्वा निर्मलो मुनिवद्भवेत्
वैतररयां नरः स्नात्वा न दुर्गतिमवाप्नुयात् १३६६
ऋषिकुल्यामथासाद्य देवकुल्यां तथैव च
अश्वतीर्थं प्रभासं च वारुरां तीर्थमेव च १३६७
वह्नितीर्थं चन्द्रतीर्थं नागतीर्थं तथैव च
चक्रतीर्थं वामनं च गोप्रदानफलं लभेत् १३६८
स्नात्वा तु मदतीर्थे च स्कन्दतीर्थे च मानवः

तथा सुरेश्वरीतीर्थे स्वर्गलोके महीयते १३६९
माहुरीं तु समासाद्य तिलप्रस्थफलं लभेत्
तत्सङ्गमे वितस्तायां स्नात्वा मुच्यते किल्विषैः १३७०
त्रिपुरेशाग्रतः पुरायामवगाह्य तु माहुरीम्
महादेवगिरिं दृष्ट्वा रुद्रलोके महीयते १३७१
अमरेशे नरः स्नात्वा गोशतस्य फलं लभेत्
मालिन्यां तु नरः स्नात्वा दशगोदफलं लभेत् १३७२
स्नात्वा पाराडवतीर्थे च पञ्चयज्ञानुपाश्नुते
उच्चेशं तीर्थमासाद्य रुद्रलोके महीयते १३७३
स्नात्वा रामह्रदातोये लभेद् बहु सुवर्णकम्
मालिनीसङ्गमं पुरायं सिन्धुना सह पार्थिव १३७४
तथा रामह्रदा यत्र युज्यते सह सिन्धुना
तयोः फलमथोद्दिष्टं राजसूयाश्वमेधयोः १३७५
संयोगं सिन्धुना यत्र गता कनकवाहिनी
गोसहस्रमवाप्नोति धनवानभिजायते १३७६
पावना च नदी पुराया रजोबिन्दुविनिर्मला
यस्यां स्नातस्त्ववाप्नोति पुराडरीकफलं नरः १३७७
तयोः समागमे पुराये राजसूयफलं स्मृतम्
तस्माद् देशादथारभ्य यावत्स्याच्चीरमोचनम् १३७८
तावत् क्षेत्रं समं पुरायं वाराणस्याः प्रकीर्तितम् १३७९
तन्मध्ये सर्वतीर्थानां सान्निध्यं कथितं मया
स्वर्गमार्गप्रदं प्रोक्तं तीर्थं चीरप्रमोचनम् १३८०
दिवमुत्सृज्य चीराणि तत्र सप्तर्षयो गताः
स्नात्वा तत्र दिवं यान्ति येऽपि पापकृतो नराः १३८१
सोदरे तु नरः स्नात्वा गोसहस्रफलं लभेत्
तथा कनकवाहिन्याः सङ्गमं याति यो नरः १३८२
तथा कालोदका पुराया नदी यत्रैव सङ्गता

तयोः फलं विनिर्दिष्टं राजसूयाश्वमेधयोः १३८३
स्नात्वाश्वमेधमाप्नोति वितस्तासिन्धुसङ्गमे
प्रौष्ठपद्यां विशेषेण एवमाहुर्मनीषिणः १३८४
पात्रतीर्थे नरः स्नात्वा पुण्डरीकमुपाश्नुते
आपगायां नरः स्नात्वा कुलमुद्धरते स्वकम् १३८५
अग्निष्टोममवाप्नोति स्नात्वा सरसि मानसे
आषाढ्यां तु विशेषेण नात्र कार्या विचारणा १३८६
वाजपेयमवाप्नोति महापद्मसरस्यपि १३८७
हिरण्या वै नदी पुण्या हरमुण्डाद्विनिःसृता
स्नातस्तस्यामवाप्नोति ह्यग्निष्टोमफलं नरः १३८८
महापद्मसरः पुण्यं हिरण्या यत्र गच्छति
अश्वमेधफलं तत्र पौर्णमास्यां विशेषतः १३८९
बहुरूपे नरः स्नात्वा विष्णुलोके महीयते
बहुरूपे च कथितं फलमेतन् नरोत्तम १३९०
शतशृङ्गे सुतीर्थे वै तीर्थे वैश्रवणस्य च
तीर्थे पुण्ये तथा राजन् भूर्जस्वामि समीपतः १३९१
वसूनामथ रुद्राणां साध्यानां मरुतामपि
विश्वेषां चैव देवानां भृगूणां च नराधिप १३९२
तथैवाङ्गिरसां राजंस्तीर्थे तीर्थे पृथक् पृथक्
दशगोदफलं प्रोक्तं मुनिभिस्तत्त्वदर्शिभिः १३९३
पालाशा च शिलामा च वितस्तां यत्र गच्छति
गोसवस्य फलं तत्र प्रत्येकं कथितं पुरा १३९४
नदी कूलारणी यत्र संयुज्यते वितस्तया
तत्र स्नात्वा कुलं शीघ्रं पुनीते मानवोत्तमः १३९५
विगाह्य पुष्करं तीर्थमतिरात्रफलं लभेत्
सप्तर्षीणां तु तीर्थे वै अग्निष्टोमफलं लभेत् १३९६
तीर्थं वाराहमासाद्य वितस्ताम्भसि मानवः

विष्णुलोकमवाप्नोति कुलमुद्धरते स्वकम्  १३९७
स्नात्वा नारायणस्थाने वितस्ताम्भसि पार्थिव
विष्णुलोकमवाप्नोति नरो नास्त्यत्र संशयः  १३९८
नदी गोत्रनदी यत्र वितस्तां प्रतिपद्यते
तयोः स्नातस्य कथितं गोसहस्रस्य यत् फलम्  १३९९
माहुरी तु नदी पुण्या मथुरेव विशेषतः
शतनीला शमाला च नदी च विमलोदका  १४००
राहुला च नदी पुण्या श्रीमाढ्या च महानदी
द्वितीया च तथा शुद्धा समूला सुरसा तथा  १४०१
आसां प्रत्येकशः स्नात्वा लभेद् गोदानजं फलम्
आसामेव तु सर्वासां सङ्गमाश्च पृथक् पृथक्  १४०२
अवगाह्य नरः शुद्धो दशगोदफलं लभेत्
अनन्ततीर्थे स्नातस्य नागलोके महीयते  १४०३
बिन्दुनादेश्वरं तीर्थं सोमतीर्थं पृथूदकम्
तुङ्गेशतीर्थक्षेत्रं तु उतङ्कस्वामिनं जलम्  १४०४
रामतीर्थं भृगोस्तीर्थं तीर्थमाङ्गिरसां तथा
दृष्ट्वैकैकमथैतेभ्यो दशगोदफलं लभेत्  १४०५
सर्वाः सरिद्वराः पुण्याः सर्वे प्रस्रवणास्तथा
इमे च राजेन्द्र तथा सर्वे पुण्याः शिलोच्चयाः  १४०६
सर्वा ऋषिकृताश्चार्चाः सरांसि विपुलानि च
सर्वत्रव महीनाथ कश्मीरेषु विशेषतः १४०७
सर्वे च सङ्गमाः पुण्या नागानां ये जलाशयाः
सुवर्णशतदानस्य फलं प्राप्नोत्यसंशयम्  १४०८
इति तीर्थानि पुण्यानि वितस्ता च विशेषतः
सर्वत्र पावनी देवी वितस्ता कथिता नृप  १४०९
तस्यां स्नात्वा दिवं यान्ति योऽपि पापकृतो नराः
वह्निष्टोममवाप्नोति स्नातस्तस्यां नराधिप  १४१०

दृष्ट्वाश्रमे वितस्ताख्ये धौम्येशे सिन्धुसङ्गमे
वराहतीर्थे पापघ्ने राजसूयफलप्रदे १४११
सदैव पुराया शुक्ले च त्रयोदश्यां विशेषतः
यत्र तत्र वितस्तायां गोरजोधूतमस्तकः १४१२
स्नात्वा त्रयोदशीं शुक्लां मुच्यते सर्वकिल्विषैः १४१३
अदृश्यं मानवः कृत्वा पातकं मुक्तपञ्चकम्
स्नानेनैकेन सलिलशिशिरेण व्यपोहति १४१४
अनर्काभ्युदिते काले सकलं शिशिरं यदि
तत्र स्नातो नरो राजन् कामानाप्नोत्यभीप्सितान् १४१५
स्नात्वा यथावद्विधिना समभ्यर्च्य हुताशनम्
ब्राह्मणेभ्यस्तदा दत्वा कृसरं घृतसंयुतम् १४१६
स्वर्गलोकमवाप्नोति यावदिन्द्राश्चतुर्दश १४१७
एवं संवत्सरं पूर्णं नित्यस्नायी नराधिप
मोक्षोपायमथासाद्य ततो मोक्षमवाप्स्यति १४१८
काश्मीरकाणां तीर्थानां फलं ते कथितं मया
सकलं नीलवाक्यं च गमिष्यामि सुखी भव १४१९
इदं धार्यं प्रयत्नेन यन्मयाभिहितं तव
श्रुत्वैतत् फलमाप्नोति दशगोदानजं नरः १४२०
वैशम्पायनः
एवमुक्त्वा स गोनन्दं बृहदश्वो महीपतिम्
धर्मात्मा तीर्थयात्रार्थं जगामाभीप्सितां गतिम् १४२१
बहु मेने तथात्मानं गोनन्दः समरप्रियः
स प्रशशास वसुधां राजा शास्त्रानुसारतः १४२२
जनमेजयः
भूयो वितस्तामाहात्म्यं कथयस्व द्विजोत्तम
तच्छ्रुत्वैव गमिष्यामि द्विजेन्द्र गतकल्मषः १४२३
वैशम्पायनः

हरस्य दयिता भार्या सती दाक्षायणी शुभा
सैवोमा कथिता राजन् प्राप्ते वैवस्वतेऽन्तरे १४२४
हिमाद्रितनया सैव यमुना पापनाशिनी
मन्वन्तरान्ते सैवोक्ता नौर्गरिष्ठा जगत्त्रये १४२५
कश्मीरा कथिता देवी वितस्ता सैव निम्नगा
पातालादुत्थिता देवी शूलघातात् तरङ्गिणी १४२६
स्नातस्य तोये वैतस्ते स्वयमात्मानमात्मना
विजानाति गताशेषकल्मषाल्लघुभागिनम् १४२७
वितस्तातो महीनाथ न गङ्गा व्यतिरिच्यते १४२८
केवलं जाह्नवीतोये पुरुषस्यास्थिसम्भवः
वितस्तातोऽधिको राजन् स्नानाद्यं तुल्यमेव च १४२९
भगीरथेन गंगा या पुरा राज्ञावतारिता
अस्थिप्लावनकामेन सगराणां महात्मनाम् १४३०
तेनेयं कथिता राजन् प्रशस्ता तत्र कर्मणि
वितस्ता वै नदी पुण्या सर्वपापहरा शुभा १४३१
वैतस्तेन तु तोयेन जठरस्थेन ये मृता
सर्वे स्वर्गमनुप्राप्ता यथा ते सोमपायिनः १४३२
नयज्ञैर्दक्षिणावद्भिस्तर्पिता देवतास्तथा
तृप्तिं समाधिगच्छन्ति यथा च सलिलैश्च तैः १४३३
पात्रे तीर्थे तथा काले मिष्टान्नैर्विविधैः कृतैः
यथा तृप्यन्ति पितरः श्राद्धै शुद्धैश्च तैर्जलैः १४३४
नागैर्बहुविधाकारैः सरिद्भिः सततं गतम्
तीर्थैर्देवैश्च ऋषिभिर्गन्धर्वैर्यक्षराक्षसैः १४३५
अभि गच्छेत् मेधावी जन्मसाफल्यकारणात् १४३६
स्नातमात्रं वितस्तायां जानाति वरुणो नरम्
जलाधिपेन ज्ञातस्य नरके पतनं कुतः १४३७
पापानां नरके घोरे पततां दुष्कृतात्मनाम्

हस्तत्राणप्रदा देवी वितस्ताघनिसूदनी १४३८
स्वर्गारोहणनिःश्रेणीं मनोरथफलप्रदाम्
वितस्तां ये गमिष्यन्ति ते यास्यन्त्यमरावतीम् १४३९
हंससारसयुक्तेन चक्रवाकोपशोभिना
विमानेनार्कवर्णेन किंकिणीजालमालिना १४४०
देवरामागणाढ्येन वीणामुरजनादिना
पुलिनैर्विविधैर्युक्तां पद्मोत्पलविभूषिताम् १४४१
गोकुलारावबहुलां हम्भारावनिनादिताम्
मत्स्यकच्छपसंबाधां सुतीर्थां कामदायिनीम् १४४२
अमृतस्वादुसलिलां नृणां दृष्टिमनोहराम् १४४३
मातेव वरदां देवीमभिगच्छन्ति ये नराः
तेऽभिगच्छन्ति राजेन्द्र प्रतिष्ठां भुवि मानवाः १४४४
समुद्ररूपस्य हरस्य भार्यां हिमालयस्याद्रिपतेस्तनूजाम्
सुस्वादुतोयामृषिवर्यजुष्टां तां त्वं पवित्रां प्रणमस्व राजन् १४४५
सिन्धुस्त्रिकोटी च तथा विशोका पुण्या नदी हर्षपथा शिवा च
पुण्या सुखा चन्द्रवती सुगन्धा पुण्योदका किल्विषनाशिनी च १४४६
कूलारणिःपापहरा च कृष्णा नदी सुपुण्या मधुमत्यथापि
नदी परोष्णी च तथात्र पुण्या प्रयान्ति दिव्यां वरदां वितस्ताम् १४४७
गङ्गा नदी शम्भुजटाकलापे चन्द्रेण देवेन तथा विभिन्ना
प्रोक्ता नृलोके नृप चन्द्रभागा आयाति पुण्यां विततां वितस्ताम् १४४८
तीर्थानि पुण्यानि सरांसि राजन् नद्यस्तडाका विविधाश्च कूपाः
आयान्ति सर्वे वरदां वितस्तां त्रयोदशीं भाद्रपदस्य शुक्लाम् १४४९
कस्यास्ति शक्तिर्नृप तेऽत्र वक्तुं देवीगुणान्वर्षशतैरनेकैः
भक्त्या मयोक्तां च निशम्य कांचिद्भक्तिं कुरुष्वात्र सदा नृवीर १४५०
श्रुत्वा वितस्तामाहात्म्यं मुच्यते सर्वक्लिवषैः
श्रुत्वा नीलमतं सर्वं दशधेनुफलं लभेत् १४५१
इत्येवमुक्तं जनमेजयस्य व्यासस्य शिष्येण महाव्रतेन

क्षिप्तं न यद् ग्रन्थगुरुत्वभीत्या समग्रशास्त्रैःखलु भारते वै १४५२
सर्वत्र नैतद् विषयोपयोग्यं तदा न चक्रे भगवान् महात्मा
अतीव हृद्ये बहुविस्तरेऽपि जनप्रिये भारतपूर्णचन्द्रे १४५३

इति वितस्तामाहात्म्यम्

समाप्तमिदम् नीलमतम्

शुभमस्तु

Reference:
*The Nilamata Purana, vol. II, (A Critical Edition and English Translation)*, Dr. Ved Kumari, J & K Academy of Art, Culture and Languages, Srinagar: 1973 (393 pages).